नारायण उवाच ।

पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम् ॥१६०॥
आसीत्सत्ययुगे ब्रह्मन् सत्यधर्मरतः सदा । स रेमे सह नारीभिः पुत्रपौत्रगणै
पुत्रानिव प्रजाः सर्वाः पालयामास धार्मिकः ।
कृत्वा क्रतुशतं राजा लेभे नेन्द्रत्वमीप्सितम् ॥१६२॥
कृत्वा नानाविधं पुण्यं फलाकाङ्क्षी न च स्वयम् ।
नित्यं नैमित्तिकं सर्वं श्रीकृष्णप्रीतिपूर्वकम् ॥१६३॥
केदारतुल्यो राजेन्द्रो न भूतो भविता पुनः ।
पुत्रेषु राज्यं संन्यस्य प्रियां त्रैलोक्यमोहिनीम् ॥१६४॥
जैगीषव्योपदेशेन जगाम तपसे वनम् । हरेरैकान्तिको भक्तो ध्यायते सततं
शश्वत् सुदर्शनश्चक्रमस्तियत्सन्निधौ मुने । चिरं तप्त्वा मुनिश्रेष्ठो गोलोक
केदारं नाम तीर्थञ्च तन्नाम्ना च बभूव ह ।
तत्राद्यापि मृतः प्राणी सद्यो मुक्तो भवेद् ध्रुवम् ॥१६७॥
कमलांशातस्य कन्या नाम्ना वृन्दा तपस्विनी । न वव्रेसावरं कञ्चिद्योगशास्त्र
दत्तो दुर्वाससा तस्यै हरेर्मन्त्रः सुदुर्लभः । सा विरक्ता गृहं त्यक्त्वा जगाम वनि
षष्टिवर्षसहस्राणि तपस्तेपे सुनिर्जने । आविर्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सः
प्रसन्नवदनः श्रीमान्वरं वृण्वित्युवाच सः ।
दृष्ट्वा सा राधिकाकान्तं शान्तं सुन्दरविग्रहम् ॥२०१॥
मूर्च्छां सम्प्राप सा सद्यः कामबाणप्रपीड़िता । साच शीघ्रं वरं वव्रे पतिस्त्वं
ओमित्युक्त्वा च रहसि चिरं रेमे तया सह । सा जगामचगोलोकं कृष्णेनसह
राधासमा सा सौभाग्याद्गोपीश्रेष्ठा बभूवह । वृन्दा यत्र तपस्तेपे तत्तु वृन्दाव
वृन्दयात्र कृता क्रीड़ा तेन वा मुनिपुङ्गव । अथान्यञ्चेतिहासञ्च शृणुष्व वत्स
येन वृन्दावनं नाम निबोध कथयामि ते । कुशध्वजस्य कन्ये द्वे धर्मशास्त्र
तुलसीवेदवत्यौच विरक्ते भवकर्मणि । तपस्तप्त्वा वेदवती प्राप नारायणं प

सीता जनककन्या सा सर्वत्र परिकीर्त्तिता ।
तुलसी च तपस्तप्त्वा वाञ्छां कृत्वा हरिं पतिम् ॥ २०८ ॥
दैवाद् दुर्वाससः शापात् प्राप्य शङ्खासुरं प्रति ।
पश्चात्सम्प्राप कमलाकान्तं कान्तं मनोहरम् ॥ २०९ ॥
चैव हरिशापेन वृक्षरूपा सुरेश्वरी । तस्याः शापेन च हरिः शालग्रामो बभूव ह ॥
॥ तस्थौ च सततं शिलावक्षसि सुन्दरी । विस्तीर्णं कथितं सर्वं तुलसीचरितञ्च ते॥
तथापि च प्रसङ्गेन किञ्चिदुक्तं मुने पुनः ॥ २११ ॥
याश्च तपसः स्थानं तदिदञ्च तपोधन । तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः ॥
वा ते प्रवक्ष्यामि परं हेत्वन्तरं शृणु । येन वृन्दावनं नाम पुण्यक्षेत्रेच भारते॥२१३॥
षोड़शनाम्नाञ्च वृन्दानाम श्रुतौश्रुतम् । तस्याः क्रीड़ावनं रम्यंतेन वृन्दावनं स्मृतम्
गोलोके प्रीतये तस्याः कृष्णेन निर्मितं पुरा ।
क्रीड़ार्थं भुवि तन्नाम्ना वनं वृन्दावनं स्मृतम् ॥ २१५ ॥

नारद उवाच ।

नि षोड़श नामानि राधिकाया जगद्गुरो । तानिमे वद शिष्याय श्रोतुंकौतूहलंमम
श्रुतं नाम्नां सहस्रञ्च सामवेदे निरूपितम् ।
तथापि श्रोतुमिच्छामि त्वत्तो नामानि षोड़श ॥ २१७ ॥
न्तराणितेषांवा तदन्यान्येवमेविभो । अहो पुण्यस्वरूपाणि भक्तानांवाञ्छितानिच
नि तेषां व्युत्पत्तिं सर्वेषां दुर्लभानि च । पावनानि जगन्मातुर्जगतामादिकारणम्

श्रीनारायण उवाच ।

रासेश्वरी रासवासिनीरसिकेश्वरी । कृष्णप्राणाधिका कृष्णप्रियाकृष्णस्वरूपिणी
वामाङ्गसम्भूता परमानन्दरूपिणी । कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी ॥
वती चन्द्रकान्ता शतचन्द्रनिभानना । नामान्येतानि साराणि तेषामभ्यन्तराणिच
त्येवञ्च संसिद्धा राकारोदानवाचकः । स्वयंनिर्माणदात्रीया सा राधापरिकीर्त्तिता
रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता ।

रासे च वासो यस्याश्च तेन सा रासवासिनी ॥ २२४ ॥

सर्वासां रसिकानाञ्च देवीनामीश्वरी परा । प्रवदन्ति पुरा सन्तस्तेन तां रसि

प्राणाधिकाप्रेयसीसा कृष्णस्यपरमात्मनः । कृष्णप्राणाधिकासाच कृष्णेनपर

कृष्णस्यातिप्रिया कान्ता कृष्णो वास्याः प्रियः सदा ।

सर्वैर्देवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥ २२७ ॥

कृष्णरूपं सन्निधातुं या शक्ता चावलीलया। सर्वांशैः कृष्णसदृशी तेन कृष्णा

वामाङ्गार्द्धेन कृष्णस्य या सम्भूतापरासती । कृष्णवामाङ्गसम्भूतातेन कृष्णेव

परमानन्दराशिश्च स्वयं मूर्तिमती सती । श्रुतिभिः कीर्तिता तेन परमानन्द

कृषिर्मोक्षार्थवचनो न एवोत्कृष्टवाचकः । आकारो दातृवचनस्तेन कृष्णा

अस्ति वृन्दावनं यस्यास्तेनवृन्दावनी स्मृता । वृन्दावनस्याधिदेवीतेन वाथ

सङ्घः सखीनां वृन्दस्यादकारोऽप्यस्तिवाचकः ।

सखिवृन्दोऽस्ति यस्याश्च सा वृन्दा परिकीर्त्तिता ॥ २३३ ॥

वृन्दावने विनोदश्च सोऽस्या ह्यस्तिच तत्रवै । वेदा वदन्तितां तेनवृन्दावन

नखचन्द्रावलीवक्त्रचन्द्रोऽस्ति यत्रसन्ततम् । तेन चन्द्रावलीसाच कृष्णेन

कान्तिरस्ति चन्द्रतुल्या सदा यस्या दिवानिशम् ।

सा चन्द्रकान्ता हर्षेण हरिणा परिकीर्त्तिता ॥ २३६ ॥

शरच्चन्द्रप्रभा यस्याश्चाननेऽस्ति दिवानिशम् । मुनिना कीर्त्तिता तेन शरच्च

इदं षोड़शनामोक्तमर्थव्याख्यानसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्क

ब्रह्मणा च पुरा दत्तं धर्माय जनकाय मे ॥ २३८ ॥

धर्मेण कृपया दत्तं मह्यमादित्यपर्वणि । पुष्करे च महातीर्थे पुण्याहे देवसं

राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा ॥ २३९ ॥

इदं स्तोत्रं महापुण्यं तुभ्यं दत्तं मया मुने । निन्दकायावैष्णवाय न दातव्यं

यावज्जीवमिदं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । राधामाधवयोः पादपद्मे भक्ति

अन्ते लभेत्तयोर्दास्यं शश्वत्सहचरोभवेत् । अणिमादिकसिद्धिश्च संप्राप्य नि

व्रतदानोपवासैश्च सर्वैर्नियमपूर्वकैः। चतुर्णाञ्चैव वेदानां पाठैः सर्वार्थसंयुतैः॥२४३॥
सर्वेषां यज्ञतीर्थानां करणैर्विधिबोधितैः। प्रदक्षिणेन भूमेश्च कृत्स्नाया एव सप्तधा॥
शरणागतरक्षायामज्ञानां ज्ञानदानतः। देवानां वैष्णवानाञ्च दर्शनेनापि यत् फलम्॥

तदेव स्तोत्रपाठस्य कलां नार्हति षोड़शीम्।
स्तोत्रस्यास्य प्रभावेण जीवन्मुक्तोभवेन्नरः॥ २४६॥

नारद उवाच।

सम्प्राप्तं परमाश्चर्यं स्तोत्रं सर्वसुदुर्लभम्। कवचञ्चापि देव्याश्च संसारविजयं प्रभो॥
कृतं स्तोत्रं सुयज्ञेन प्राप्तंतदपि दुर्लभम्। श्रुत्वाकृष्णकथां चित्रां त्वत्पादाब्जप्रसादतः
अधुना श्रोतुमिच्छामि यद्रहस्यञ्च तद्वद। प्रातश्च नगरं दृष्ट्वा किमूचुर्वल्लभा मुने॥२४९॥

श्रीनारायण उवाच।

गतायां तत्र यामिन्यां गते च विश्वकर्मणि। अरुणोदयवेलायां जनाः सर्वे जजागरुः
उत्थाय दृष्ट्वा नगरं सर्वेभ्योऽपि विलक्षणम्। किमाश्चर्यं किमाश्चर्यमित्यूचुर्व्रजवासिनः
कांश्चिद्गोपान् केचिदूचुः कुत एतदभूदिदम्। न जाने केन रूपेण को भूमौ प्रभवेदिति
बुबुधे मनसा नन्दो गर्गवाक्यमनुस्मरन्। श्रीहरेरिच्छया सर्वंजगदेतच्चराचरम्॥२५३॥

ब्रह्मादितृणपर्यन्तं यस्य भ्रूभङ्गलीलया।
आविर्भूतं तिरोभूतं तस्यासाध्यञ्च किं कुतः॥ २५४॥

विवरेष्वेवयल्लोम्नां ब्रह्माण्डान्यखिलानिच। ईशस्य तन्महाविष्णोः किमसाध्यंहरेरहो
ब्रह्मानन्तेशधर्माश्च ध्यायन्ते यत्पदाम्बुजम्। किमसाध्यं तदीशस्य मायामानुषरूपिणः
भ्रामं भ्रामं तन्नगरं दर्शं दर्शं गृहं गृहम्। पाठं पाठञ्च नामानि सर्वेभ्यो निलयं ददौ॥
कृत्वा शुभक्षणं नन्दो वृषभानुश्च कौतुकी। चकार सगणैः सार्द्धं मुदाश्रमनिवेशनम्
सर्वे वृन्दावनस्थाश्च प्रसन्नवदनेक्षणाः। मुदा प्रवेशनञ्चक्रुः स्वं स्वमाश्रममुत्तमम्॥२५९

सर्वे मुमुदिरे गोपाः स्वे स्वे स्थाने मनोहरे।
बालका बालिकाश्चैव चिक्रीडुश्च प्रहर्षिताः॥ २६०॥

श्रीकृष्णो बलदेवश्चशिशुभिः सहकौतुकात्। क्रीड़ाञ्चकारतत्रैव स्थाने स्थाने मनोहरे

इत्येवं कथितं सर्वं निर्माणं नगरस्यच । अबलानां वने रासमण्डलस्यच नारद॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे श्रीकृ
नगरवर्णनं नाम सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः

### विप्रपत्नीनां मोक्षणम्

शौनक उवाच ।

अहो किमद्भुतं सूत रहस्यं सुमनोहरम् । श्रुतं कृष्णस्य चरितं सुखदं मोक्षदं पर

सूत उवाच ।

श्रुत्वा नगरनिर्माणं नारदो मुनिसत्तमः । पप्रच्छ कृष्णचरितमपरं सुमनोहरम्।

नारद उवाच ।

श्रीकृष्णाख्यानचरितं पीयूषमृषिसत्तम । ज्ञानसिन्धो निगद मां शिष्यश्च शरण
नारदस्य वचः श्रुत्वा मुदा नारायणः स्वयम् । उवाच परमीशस्य चरितं परमा

श्रीनारायण उवाच ।

एकदा बालकैः सार्द्धं बलेन सह माधवः । जगाम श्रीमधुवनं यमुनातीरनीरजम्
विचेरुर्गोसहस्रैश्च चिक्रीडुर्बालकास्तदा । विश्रान्तास्तृट्परीताश्च क्षुधा च परिपी

तमूचुर्गोपशिशवः श्रीकृष्णं परया मुदा ।
क्षुदस्मान् बाधते कृष्ण किं कुर्मो ब्रूहि किङ्करान् ॥ ७ ॥

शिशूनां वचनं श्रुत्वा तानुवाच दयानिधिः । हितं तथ्यञ्च वचनं प्रसन्नवदनेक्षणः

श्रीकृष्ण उवाच ।

बालागच्छतविप्राणां यज्ञस्थानं सुखावहम् । अन्नंयाचततान्शीघ्रंब्राह्मणांश्चकृताञ्ज
विप्रा आङ्गिरसाः सर्वेस्वाश्रमे श्रीवनान्तिके । यज्ञंकुर्वन्तिविप्राश्च श्रुतिस्मृतिवि

निष्पृहा वैष्णवाः सर्वे मां यजन्ति मुमुक्षवः ।
मायया मां न जानन्ति मायामानुषरूपिणम् ॥ ११ ॥

वेद्ददतियुष्मभ्यमन्नं विप्राःक्रतून्मुखाः । तत्कान्तायाचत क्षिप्रंदयायुक्ताःशिशून्प्रति
कृष्णवचनं श्रुत्वा ययुर्बालकपुङ्गवाः । पुरतो ब्रह्मणानाञ्च तस्थुरानम्रकन्धराः ॥

इत्यूचुर्बालकाः शीघ्रमन्नं दत्त द्विजोत्तमाः ।
न शुश्रुवुर्द्विजाः केचित् केचिच्छ्रुत्वा स्थिताः स्थिताः ॥ १४ ॥

ययू रन्धनागारं ब्राह्मण्यो यत्रपाचिकाः । गत्वाबाला विप्रभार्याः प्रणेमुर्नतकन्धराः
वोचुर्बालकाःसर्वेविप्रभार्याःपतिव्रताः । अन्नंदत्तमातरोऽस्मान्क्षुधार्तान्बालकानपि
लानां वचनं श्रुत्वा दृष्ट्वातांश्चमनोहरान् । पप्रच्छुः सादरं साध्व्यः स्मेराननसरोरुहाः

विप्रपत्न्य ऊचुः ।

के यूयं प्रेषिताः केन कानि नामानि कोविदाः ।
दास्यामोऽन्नं बहुविधं व्यञ्जनैः सहितं वरम् ॥ १८ ॥
ब्राह्मणीनां वचः श्रुत्वा ता ऊचुस्ते मुदान्विताः ।
स्निग्धा हसन्तः स्फीताश्च सर्वे गोपालबालकाः ॥ १९ ॥

बाला ऊचुः ।

तारामकृष्णाभ्यांवयंक्षुत्पीड़िताभृशम् । दत्तान्नंमातरोऽस्मभ्यंक्षिप्रंयामस्तदान्तिकम्
ऽविदूरे भाण्डीरे वनाभ्यन्तरमेव च । वटमूले मधुवने वसन्तौ रामकेशवौ ॥ २१ ॥
श्रान्तौ क्षुधितौ तौ च याचेतेऽन्नञ्चमातरः । किमु देयमदेयं वा शीघ्रं वदत नोऽधुना
नानाञ्च वचः श्रुत्वा हृष्टानन्दाश्रुलोचनाः । पुलकाङ्कितसर्वाङ्गास्तत्पादाब्जमनोरथाः
व्यञ्जनसंयुक्तं शाल्यन्नं सुमनोहरम् । पायसं पिष्टकं स्वादु दधि क्षीरं घृतं मधु ॥

रौप्ये कांस्ये राजते च पात्रे कृत्वा मुदान्विताः ।
ताः सर्वा विप्रपत्न्यश्च प्रययुः कृष्णसन्निधिम् ॥ २५ ॥

मनोरथं कृत्वामनसा गमनोत्सुकाः । पतिव्रतास्ता धन्याश्चश्रीकृष्णदर्शनोत्सुकाः
कृष्णं ददृशुर्गत्वा रामञ्च सहबालकम् । वटमूले वसन्तन्तमुडुमध्ये यथोडुपम् ॥२७॥

श्यामं किशोरंवयसा पीतकौशेयवाससम्। सुन्दरंसस्मितं शान्तंराधाकान्तं
शरत्पार्वणचन्द्रास्यं रत्नालङ्कारभूषितम्। रत्नकुण्डलयुग्माभ्यां गण्डस्थलविरा
रत्नकेयूरवलयरत्ननूपुरभूषितम्। आजानुलम्बतां शुभ्रां बिभ्रतं रत्नमालिकाम्।
मालतीमालया कण्ठवक्षःस्थलविराजितम्।
चन्दनागुरुकस्तूरीकुङ्कुमार्चितविग्रहम् ॥ ३१ ॥
सुनखं सुकपोलञ्च पक्वबिम्बाधरं वरम्। पक्वदाड़िमबीजाभं बिभ्रतं दन्तमुक्त
शिखिपिच्छसमायुक्तं बद्धचूड़ं परात्परम्। कदम्बपुष्पयुग्माभ्यां कर्णमूले वि
ध्यानासाध्यं योगिनाञ्च भक्तानुग्रहकातरम्। ब्रह्मेशधर्मशेषेन्द्रैः स्तूयमानं मुदं
दृष्ट्वैवमीश्वरं भक्त्या प्रणेमुर्द्विजयोषितः। स्वानां ज्ञानानुरूपञ्च तुष्टुवुर्मधुसूदन

विप्रपत्न्य ऊचुः।

त्वं ब्रह्म परमंधाम निरीहोनिरहङ्कृतिः। निर्गुणश्च निराकारः साकारः सगु
साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः। प्रकृतिः पुरुषस्त्वञ्च कारणञ्च
सृष्टिस्थित्यन्तविषये येच देवास्त्रयः स्मृताः। तेत्वदंशाः सर्वबीजा ब्रह्मविष्णु
यस्यलोम्नाञ्च विवरेचाखिलंविश्वमीश्वर। महाविराट्महाविष्णुस्त्वं तस्यज
तेजस्त्वञ्चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः।
वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ४० ॥
महदादि सृष्टिसूत्रं पञ्च तन्मात्रमेव च। बीजं त्वं सर्वशक्तीनां सर्वशक्ति
सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा। त्वमनीहःस्वयं ज्योतिः सर्वानन्द
अहोऽप्याकारहीनस्त्वं सर्वविग्रहवानपि। सर्वेन्द्रियाणां विषयंजानासि नेन्द्रि
सरस्वती जड़ीभूतायत्स्तोत्रे यन्निरूपणे। जड़ीभूतो महेशश्च शेषोधर्मो वि
पार्वती कमला राधा सावित्री वेदसूरपि। वेदश्च जड़तां याति के वा शक्ता
वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर। प्रसन्नो भव नो देव दीनबन्धो
इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे।
अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ ४७ ॥

विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत्।
स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥ ४८ ॥

नारायण उवाच।

ताः पदाम्भोजपतिता दृष्ट्वा श्रीमधुसूदनः। वरं वृणुत कल्याणं भविता चेत्युवाच ह ॥
श्रीकृष्णस्य वचःश्रुत्वाविप्रपत्न्योमुदान्विताः। तमूचुर्वचनं भक्त्याभक्तिनम्रात्मकन्धराः

द्विजपत्न्य ऊचुः।

वरं कृष्ण न गृह्णीमो नः स्पृहा त्वत्पदाम्बुजे।
देहि त्वं दास्यमस्मभ्यं दृढ़ां भक्तिं सुदुर्लभाम् ॥५१॥

पश्यामोऽनुक्षणं वक्त्रसरोजं तव केशव। अनुग्रहं कुरु विभो न यास्यामो गृहं पुनः ॥

द्विजपत्नीवचः श्रुत्वा श्रीकृष्णः करुणानिधिः।
ओमित्युक्त्वा त्रिलोकेशस्तस्थौ बालकसंसदि ॥५३॥

प्रदत्तं विप्रपत्नीभिर्मिष्टमन्नं सुधोपमम्। बालकान् भोजयित्वा तु स्वयञ्च बुभुजे विभुः
एतस्मिन्नन्तरे तत्र शातकुम्भं रथं परम्। ददृशुर्विप्रपत्न्यश्च पतन्तं गगनादहो ॥५५॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम्। रत्नस्तम्भैर्निबद्धश्च सद्रत्नकलशोज्ज्वलम् ॥५६॥
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम्। पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥

शतचक्रसमायुक्तं मनोयायि मनोहरम्।
वेष्टितं पार्षदैर्दिव्यैर्वनमालाविभूषितैः ॥५८॥

पीतवस्त्रपरीधानै रत्नालङ्कारभूषितैः। नवयौवनसम्पन्नैः श्यामलैः सुमनोहरैः ॥५९॥
द्विभुजैर्मुरलीहस्तैर्गोपवेशधरैर्वरैः। शिखिपिच्छगुञ्जमालाबद्धवक्रिमचूड़कैः ॥ ६० ॥
अवरुह्य रथात्तूर्णं ते प्रणम्य हरेः पदम्। रथस्यारोहणं कर्तुमूचुर्ब्राह्मणकामिनीः ॥६१॥

विप्रभार्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम्।
बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान् ॥६२॥
हरिश्छायां विनिर्माय तासाञ्च विष्णुमायया।
प्रस्थापयामास गृहान् ब्राह्मणानां स्वयं विभुः ॥६३॥

विप्राश्च भार्या उद्दिश्य परमोद्विग्नमानसाः । अन्वेषणं प्रकुर्वन्तो ददृशुः पथि का
दृष्ट्वोचुर्ब्राह्मणाः सर्वे तास्ते च विनयान्विताः । पुलकाङ्कितसर्वाङ्गाः प्रसन्नवदने

ब्राह्मणा ऊचुः ।

अहोऽतिधन्या यूयञ्च दृष्टो युष्माभिरीश्वरः । अस्माकं जीवनं व्यर्थं वेदपाठोऽप्य
वेदे पुराणे सर्वत्र विद्वद्भिः परिकीर्तिताः । हरेर्विभूतयः सर्वाः सर्वेषां जनको ह
तपो जपो व्रतं ज्ञानं वेदाध्ययनमर्चनम् । तीर्थस्नानमनशनं सर्वेषां फलदो हरि

श्रीकृष्णः सेवितो येन किं तस्य तपसां फलैः ।
प्राप्तः कल्पतरुर्येन किं तस्यान्येन शाखिना ॥६९॥

श्रीकृष्णो हृदये यस्यतस्य किं कर्मभिः कृतैः । किं पीतसागरस्यैव पौरुषं कूपल

इत्येवमुक्त्वा विप्राश्च गृहीत्वा कामिनी वराः ।
आजग्मुः स्वगृहं हृष्टास्ताभिः सार्धञ्च रेमिरे ॥७१॥

तासां ततोऽधिकं प्रेम क्रीड़ासु सर्वकर्मसु । दाक्षिण्यंमायायाशक्त्याब्राह्मणानामर्
अथ नारायणः सोऽयं बलेन शिशुभिः सह । जगाम स्वालयं तूर्णं पूर्णब्रह्मसना
इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम् । पुरा श्रुतं धर्मवक्त्रात् किंभूयःश्रोतुमि

नारद उवाच ।

ऋषीन्द्र केन पुण्येन बभूव विप्रयोषिताम् । मुनीन्द्रयोगसिद्धानां दुर्लभा गतिर्प

इमाः का वा पुण्यवत्यः पुरा तस्थुर्महीतलम् ।
आजग्मुः केन दोषेण वद सन्देहभञ्जनम् ॥७६॥

श्रीनारायण उवाच ।

सप्तर्षीणां रमण्यश्च रूपेणाप्रतिमाः पराः । गुणवत्यः सुशीलाश्च धर्मिष्ठाश्च पति
नवीनयौवनाः सर्वाः पीनश्रोणिपयोधराः । दिव्यवस्त्रपरीधाना रत्नालङ्कारभू
तप्तकाञ्चनवर्णाभाः स्मेराननसरोरुहाः । मुनीनां मोहितुं शक्ता मानसं वक्रचक्षु
दृष्ट्वा तासां स्तनश्रोणिमुखानि सुन्दराणि च । अनलश्चकमे ताश्च मदनानलपीडि

अग्निस्थानस्थितानाञ्च शिखया सुरतोन्मुखः ।

स्पृष्ट्वा चाङ्गानि तासाञ्च बभूव हतचेतनः ॥८१॥

पतिव्रता न जानन्ति पतिपादाब्जमानसाः । अग्निरङ्गानि तासाञ्च दर्शं दर्शं मुमोह च ॥
वह्नेश्च मानसं ज्ञात्वा भगवानङ्गिरा मुनिः । शशाप तं चेत्युवाच सर्वभक्षो बभूव ह ॥
वह्निः सचेतनो भूत्वा तुष्टाव मुनिपुङ्गवम् । व्रीड़या नम्रवदनश्चकम्पे ब्रह्मतेजसा ॥८४॥
क्रुद्धो मुनिः परस्पृष्टाः कामिनीश्च शशाप ह । यात यूयं पापयुक्ता मानुषीं योनिमेव च
भारते ब्राह्मणानाञ्च गृहे लभत जन्म वै । करिष्यन्ति विवाहञ्च युष्माकंकुलजा द्विजाः
श्रुत्वा वाक्यं मुनेस्ताश्च रुरुदुः प्रेमविह्वलाः । पुटाञ्जलियुताः सर्वा ऊचुस्तं विदुषांवरम्

मुनिपत्न्य ऊचुः ।

न त्यजास्मान्मुनिश्रेष्ठ निष्पापाश्च पतिव्रताः ।
अजानन्त्यः परस्पृष्टा न च नस्त्यक्तुमर्हसि ॥८८॥

भक्तानां किङ्करीणाञ्च न दण्डं कर्तुमर्हसि । युष्माकं चरणाम्भोजं कदा द्रक्ष्यामहेवयम्
वज्रच्छेदाद्वज्रपातात्सर्वप्रहरणान्मुने । दारुणः कान्तविच्छेदःसाध्वीनां दुःसहः सदा ॥

ब्रह्मिष्ठानां गुणवतां परान् कान्तान्महामुनीन् ।
एवम्भूतान् कथं त्यक्त्वा यास्यामः पृथिवीतलम् ॥९१॥

यास्यामो यदि विप्रेश कदात्रागमनं वद । अज्ञानस्पर्शदोषश्च न स्यान्नो विधिबोधितः

अहल्यया पुनः प्राप्तः स्वामीन्द्रस्य प्रर्धषणात् ।
सा सम्भोगात् पुनः शुद्धा स्पर्शनाद् वर्जिता वयम् ॥९३॥

विचारं कुरु धर्मिष्ठ वेदवेदाङ्गपारग । विश्वकर्तुश्च पुत्रस्त्वं सर्ववेदविदां वर ॥ ९४ ॥

अन्येषाञ्च भयात्कान्ता व्रजन्ति शरणम्पतिम् ।
स्वकान्तभयसंविग्नाः शरणं कं व्रजन्ति ताः ॥९५॥

पतिरभयं देहि धर्मिष्ठ भययुक्ताभ्य एव च । पुत्रे शिष्ये कलत्रे च को दण्डं कर्तुमक्षमः ॥
मूर्खो दुर्बलः सबलो वापि स्ववस्तूनामपीश्वरः । स्वद्रव्यविक्रयं कर्तुं न चान्यो रक्षितुं क्षमः

कामिनीनां वचः श्रुत्वा दयालुर्मुनिपुङ्गवः ।
प्रेम्णा रुरोद तासाञ्च निरीक्ष्य मुखपङ्कजम् ॥९८॥

वेदवेदाङ्गपारज्ञो ज्ञानिनां योगिनां वरः । पत्नीविच्छेदविषये मूर्च्छां प्राप तथापि
सर्वे बभूवुः शोकार्ता विरहोद्विग्नमानसाः ।
निरीक्ष्य तासां वक्त्राणि तस्थुः पुत्तलिका यथा ॥१००॥
कृत्वा विलापं सुचिरं सर्ववेदविदां वरः । भ्रातृभिश्च सहालोच्य ता उवाच शु

अङ्गिरा उवाच ।

यूयं शृणुत वक्ष्यामि वचनं सत्यमेव च ।
स्वकर्मभोगिनाम्भोगमाकर्माच्च श्रुतौ श्रुतम् ॥१०२॥
गतो भोगश्च युष्माकमस्माभिः सह निश्चितम् । गते भोगे पुनर्भोगो नहि वेदे
शुभाशुभञ्च यत्कर्म्म भारते कृतिभिः सह । नाभुक्तं क्षीयते कर्म्म जन्मकोटिश
परभुक्ताञ्च कान्ताञ्च यो भुङ्क्ते स नराधमः ।
स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥१०५॥
न सा दैवे न सा पैत्र्ये पाकार्हा पापसंयुता ।
तस्या आलिङ्गने भर्ता भ्रष्टश्रीस्तेजसा हतः ॥१०६॥
देवताः पितरस्तस्य हव्यदाने च तर्पणे । सुखिनो न भवन्त्येवमित्याह कमले
तस्माद्यत्नेन भार्याया रक्षणं कुरुते सुधीः । अन्यथा पापभाग्भर्ता निश्चितं नरके
पदे पदे सावधानः कान्तां रक्षति पण्डितः ।
न व्रती न स्थली योषा दोषाणाञ्च करण्डिका ॥१०९॥
कलत्रं पाकपात्रञ्च सदा रक्षतुमर्हति । परस्पर्शादशुद्धाञ्च शुद्धां स्वस्पर्शने सदा
स्वकान्तञ्च परित्यज्य परंगच्छति याऽधमा । कुम्भीपाकं सा प्रयाति यावच्चन्द्र
तामेव यमदूताश्च संस्थाप्य नरकान्तरे । उत्तिष्ठति चिदूराच्चेत् कुर्वन्ति दण्ड
सर्पप्रमाणाः कीटाश्च तीक्ष्णदंष्ट्राः सुदारुणाः । दशन्ति पुंश्चलींतत्रसततञ्च दि
विकृताकारशब्दञ्च करोति शाश्वतम्भिया । न ममार प्रहारेण सूक्ष्मदेहविधा
मुहूर्त्तार्द्धं सुखं भुक्त्वा लोकेऽत्र यशसा हता । पतिता परलोके च गतिमेता
परस्पृष्टा च या नारी या स्पृहां कुरुते परम् ।

सापि दुष्टा परित्याज्या चेत्याह कमलोद्भवः ॥११६॥

स्मान्नारी परैर्यत्नाद्दुष्टा कृतिभिः कृता। असूर्य्यम्पश्या यादाराःशुद्धास्ताश्च पतिव्रताः
च्छन्दगामिनी या च स्वतन्त्रा सूकरीसमा। अन्तर्दुष्टा सदा सैव निश्चितंपरगामिनी

स्वामिसाध्या च या नारी कुलधर्मभिया स्थिता।

कान्तेन सार्द्धं सा कान्ता वैकुण्ठं याति निश्चितम् ॥११९॥

यात यूयञ्च पृथिवीं मानुषीं योनिमीप्सिताम्।

कृष्णदर्शनमात्रेण गोलोकं यास्यथ ध्रुवम् ॥१२०॥

हरिणा निर्मिताश्छाया युष्माकं योगमायया।

ता विप्रमन्दिरे स्थित्वा चागमिष्यन्ति नो ध्रुवम् ॥१२१॥

रंशेन नो पत्न्यो भविष्यथ न संशयः। युष्माकं मम शापश्च बभूव च वराधिकः॥
येवमुक्त्वा स मुनिर्विरराम शुचान्वितः। ता आगत्य महीं शापाद् बभूवुर्विप्रयोषितः
चान्नं हरये भक्त्या प्रजग्मुर्हरिमन्दिरम्। बभूव निश्चितं तासां शापश्च सम्पदोऽधिकः
द्या नीचाच्च सम्पत्तिर्विपत्तिर्महतो वरा। अहो सद्यः सतां कोपश्चोपकाराय कल्पते
ना विपत्तेर्महिमा कुतः कस्य भवेद्भुवि। भूताः कान्तपरित्यागान्मुक्ता ब्राह्मणयोषितः
वेवं कथितं सर्वं हरेश्चरितमुत्तमम्। अहो पुण्यवतीनाञ्च मोक्षाख्यानं मनोहरम्॥

श्रीकृष्णाख्यानं विप्रेन्द्र नूतनं नूतनं पदे पदे।

न हि तृप्तिः श्रुतवतां केन श्रेयसि तृप्यते ॥१२८॥

वद्रम्यं तत् कथितं यच्छ्रुतं गुरुवक्त्रतः। वद मां वाञ्छितंयत्तेकिंभूयःश्रोतुमिच्छसि

नारद उवाच।

च्छ्रुतं त्वया पूर्वं गुरुवक्त्रात् कृपानिधे। मङ्गलं कृष्णचरितं तन्मे ब्रूहि जगद्गुरो!

सूत उवाच।

त्वा देवर्षिवचनमृषिर्नारायणः स्वयम्। अपरं कृष्णमाहात्म्यं प्रवक्तुमुपचक्रमे ॥१३१

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
विप्रपत्नीमोक्षणप्रस्तावो नामाष्टादशोऽध्यायः।

---

# ऊनविंशोऽध्यायः

## कालीयदमनाख्यानम् ।

श्रीनारायण उवाच ।

एकदा बालकैः सार्धं बलदेवं विना हरिः । जगाम यमुनातीरं यत्र कालीयम
परिपक्वफलं भुक्त्वा यमुनातीरजे वने । स्वेच्छामयस्तृट्परीतः पपौ च निर्मलं

गोकुलं चारयामास शिशुभिः सह कानने ।
विजहार च तैः सार्धं स्थापयामास गोकुलम् ॥३॥
क्रीडानिमग्नचित्तोऽयं बालकाश्च मुदान्विताः ।
भुक्त्वा नवतृणं गावो विषतोयं पपुर्मुने ॥ ४ ॥
विषाक्तञ्च जलं पीत्वा दारुणान्तकचेष्टया ।
ज्वालाभिः कालकूटानां सद्यः प्राणांश्च तत्यजुः ॥५॥

दृष्ट्वा मृतं गोसमूहं गोपाश्चिन्ताकुला भिया । विषण्णवदनाः सर्वे तमूचुर्भ

ज्ञात्वा सर्वं जगन्नाथो जीवयामास गोकुलम् ।
उत्तस्थुस्तत्क्षणं गावो ददृशुः श्रीहरेर्मुखम् ॥७॥

कृष्णः कदम्बमारुह्य यमुनातीरनीरजम् । पपात सर्पभवने नागमध्ये नराकृति
शतहस्तप्रमाणञ्च जलोत्थानं बभूव ह । बाला हर्षं विषादञ्च मेनिरे तत्र ना
सर्पो नराकृतिं दृष्ट्वा कालियः क्रोधविह्वलः । जग्राह श्रीहरिं तूर्णं तप्तलोहं य
दग्धकण्ठोदरो नागश्चोद्विग्नो ब्रह्मतेजसा । प्राणा यान्त्येवमुक्त्वा च चकार
भग्नदन्तो रक्तमुखः कृष्णवज्राङ्गचर्वणात् । रक्तवक्त्रस्य भगवानुत्तस्थौ मस्तकी
नागो विश्वम्भराक्रान्तः स प्राणांस्त्यक्तुमुद्यतः । चकार रक्तोद्वमनं पपात मू

दृष्ट्वा तं मूर्च्छितं नागा रुरुदुः प्रेमविह्वलाः ।
केचित्पलायिता भीताः केचित् प्रविविशुर्बिलम् ॥ १४ ॥

मरणाभिमुखं कान्तं दृष्ट्वा सा सुरसा सती ।
नागिनीभिः सह प्रेम्णा रुरोद पुरतो हरेः ॥१५॥
ाञ्जलियुता तूर्णं प्रणम्य श्रीहरिं भिया। धृत्वा पादारविन्दे च तमुवाच भियाकुला॥

सुरसोवाच ।

हे जगत्कान्त कान्तं मे देहि मानञ्च मानद ।
पतिः प्राणाधिकः स्त्रीणां नास्ति बन्धुश्च तत्परः ॥१७॥
े सुरवरनाथ ! प्राणनाथं मदीयं ! न कुरु वधमनन्तप्रेमसिन्धो ! सुबन्धो ! ।
िलभुवनबन्धो ! राधिकाप्रेमसिन्धो! पतिमिह कुरु दानं मे विधातुर्विधातः ॥१८॥
यनविधिशेषाः षण्मुखश्चास्यसङ्घैः स्तवनविषयजाड्याः स्तोतुमीशा न वाणी ।
लु निखिलवेदाः स्तोतुमन्येऽपि देवाः स्तवनविषयशक्ताः सन्ति सन्तस्तवैव ॥
तिरहमविज्ञा योषितां काधमा वा क भुवनगतिरीशश्चक्षुषो गोचरोऽपि ।
िहरिहरशेषैः स्तूयमानश्च यस्त्वमतनुमनुजमीशं स्तोतुमिच्छामि तं त्वाम् ॥२०॥
नविषयभीता पार्वती यस्य पद्मा श्रुतिगणजनयित्री स्तोतुमीशा न यं त्वाम् ।
कलुषनिमग्ना वेदवेदाङ्गशास्त्रश्रवणविषयमूढा स्तोतुमिच्छामि किं त्वाम् ॥२१
शयानो रत्नपर्य्यङ्के रत्नभूषणभूषितः ।
रत्नभूषणभूषाङ्गी राधावक्षसि संस्थितः ॥ २२ ॥
चन्दनोक्षितसर्वाङ्गः स्मेराननसरोरुहः ।
प्रोद्यत्प्रेमरसाम्भोधौ निमग्नः सततं सुखात् ॥ २३ ॥
मल्लिकामालतीमालाजालैः शोभितशेखरः।
पारिजातप्रसूनानां गन्धामोदितमानसः ॥ २४ ॥
ोकिलकलध्वानैर्भ्रमरध्वनिसंयुतैः । कुसुमेषु विकारेण पुलकाङ्कितविग्रहः ॥२५॥
प्रदत्तताम्बूलं भुक्तवान् यः सदामुदा। वेदा अशक्ता यं स्तोतुं जड़ीभूताविचक्षणाः
िर्वचनीयश्च किं स्तौमि नागवल्लभा । वन्देऽहं त्वत्पदाम्भोजं ब्रह्मेशशेषसेवितम् ॥
ीसरस्वतीदुर्गाजाह्नवीवेदमातृभिः । सेवितं सिद्धसङ्घैश्च मुनीन्द्रैर्मनुभिः सदा ॥

निष्कारणायाखिलकारणाय सर्वेश्वरायापि परात्पराय ।
स्वयं प्रकाशाय परावराय परावराणामधिपाय ते नमः ॥ २९ ॥
हे कृष्ण हे कृष्ण सुरासुरेश ब्रह्मेश शेषेश प्रजापतीश ।
मुनीश मन्वीश चराचरेश सिद्धीश सिद्धेश गुणेश पाहि ॥ ३० ॥
धर्मेश धर्मीश शुभाशुभेश वेदेश वेदेष्वनिरूपितश्च ।
सर्वेश सर्वात्मक सर्वबन्धो जीवीश जीवेश्वर पाहि मत्प्रभुम् ॥ ३

इत्येवं स्तवनं कृत्वा भक्तिनम्रात्मकन्धरा । विधृत्य चरणाम्भोजं तस्थौ
नागपत्नीकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । सर्वपापात् प्रमुक्तस्तु यात्यन्ते
इहलोके हरेर्भक्तिमन्ते दास्यं लभेद् ध्रुवम् । लभते पार्षदो भूत्वा सालोक्यादि

नारद उवाच ।

नागपत्नीवचः श्रुत्वा भगवान् सर्वनन्दनः ।
प्रहृष्टोत्फुल्लनयनः किमुवाच हरिः स्वयम् ॥ ३५ ॥
कथयस्व महाभाग रहस्यं परमाद्भुतम् ॥ ३६ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा भगवान् सर्वदर्शनः । उवाच परमाख्यानं मधुवृन्दं प

नारायण उवाच ।

नागपत्नीवचः श्रुत्वा श्रीकृष्णस्तामुवाच ह । पुटाञ्जलियुतां पादे पतितां भ

श्रीकृष्ण उवाच

उत्तिष्ठोऽत्तिष्ठ नागेशि वरं वृणु भयं त्यज । गृहाण कान्तं हे मातर्मद्वरप
कालिन्दीह्रदमुत्सृज्य स्वकीयं भवनं व्रज ॥ ३९ ॥
भर्त्रा स्वगोष्ठ्या सार्द्धञ्च गच्छ वत्से त्वमीप्सितम् ।
अद्य प्रभृति नागेशि भूता कन्या च त्वं मम ॥ ४० ॥
त्वत् प्राणाधिक एवायं जामाता च न संशयः ।
मत्पादपद्मचिह्नेन गरुड़स्त्वत्पतिं शुभे ॥ ४१ ॥

कृत्वा च स्तवनं भक्त्या प्रणमिष्यति मत्पदम् ।
त्यज त्वं गरुडाद्भीतिं शीघ्रं रमणकं व्रज ।
ह्रदान्निर्गच्छ वत्से त्वं वरं वृणु यथेप्सितम् ॥ ४२ ॥

कृष्णस्य वचः श्रुत्वा प्रसन्नवदनेक्षणा । उवाच साश्रुनेत्रा सा भक्तिनम्रात्मकन्धरा

सुरसोवाच ।

रं दास्यसिचेन्मह्यं वरदेश्वर हे पितः । त्वत्पादाब्जे दृढांभक्तिं निश्चलांदातुमर्हसि ॥
मनस्त्वत्पदाम्भोजे भ्रमतु भ्रमरो यथा । तव स्मृतेर्विस्मृतिर्मे कदापि न भविष्यति
स्वकान्ते मम सौभाग्यं कान्तोऽयं ज्ञानिनां वरः ।
इत्येवं प्रार्थनीयश्च परिपूर्णं कुरु प्रभो ॥ ४६ ॥

येवमुक्त्वा सर्पस्त्री प्रतस्थौ पुरतो हरेः । शरत्पार्वणचन्द्रास्यं ददर्श श्रीहरेर्मुखम् ॥
चनाभ्यां पपौ वक्त्रं निमेषरहितं सती । सर्वाङ्गपुलकोद्भिन्ना सानन्दाश्रुपरिप्लुता ॥
न्दरं बालकं दृष्ट्वा पुत्रस्नेहं प्रकुर्वती । उवाच पुनरेवेदं भक्त्युद्रेकपरिप्लुता ॥ ४९ ॥
यास्यामि रमणकंतत्र नास्ति प्रयोजनम् । सर्पःकरोतु संसारंकुरु मां निजकिंकरीम्
न वाञ्छा मम हे कृष्ण सालोक्यादिचतुष्टये ।
त्वत्पदाम्भोजसेवायाः कलां नार्हति षोड़शीम् ॥ ५१ ॥
विना त्वत्पादसेवाञ्च यो वाञ्छति वरान्तरम् ।
भारते दुर्लभं जन्म लब्ध्वाऽसौ वञ्चितः स्वयम् ॥५२॥

पत्नीवचः श्रुत्वा स्मेराननसरोरुहः । प्रसन्नमानसः श्रीमानोमित्येवमुवाच ह ॥५३
स्मिन्नन्तरे दिव्यः सद्रत्नसारनिर्मितः । आजगाम रथस्तूर्णमुद्दीप्तस्तेजसा मुने ॥५४
दप्रवरैर्युक्तो वस्त्रमालापरिच्छदः । शतचक्रो वायुवेगो मनोयायी मनोहरः ॥५५॥
अवरुह्य रथात्तूर्णं श्यामलाः श्यामकिङ्कराः ।
प्रणम्य कृष्णं तां नीत्वा जग्मुर्गोलोकमुत्तमम् ॥ ५६ ॥

छायां विनिर्माय ददौ सर्पाय तेजसा । सच किञ्चिन्न बुबुधे मोहितो विष्णुमायया
रुह्य सर्पमूर्ध्नः श्रीकृष्णः करुणानिधिः । ददौ हस्तञ्च कृपया शीघ्रं कालीयमस्तके ॥

सम्प्राप्य चेतनां सद्यो ददर्श पुरतो हरिम् । पुटाञ्जलियुतां साश्रुपूर्णाञ्च सुप
प्रणनाम हरिं सद्यो रुरोद प्रेमविह्वलः । भक्त्युद्रेकात्साश्रुनेत्रां पुलकाङ्कितविग्रह
तूष्णीम्भूताञ्चतां दृष्ट्वा समुवाच कृपानिधिम् । मदीश्वरस्य सततं योग्यायो

श्रीकृष्ण उवाच ।

वरं वृणु त्वं कालीय यस्ते मनसि वर्तते । त्वं मे प्राणाधिको वत्स सुखं ति
तस्याहमनुगृह्णामि योऽतिभक्तो ममांशजः । किञ्चित्त्वद्दमनं कृत्वा प्रसादं हि
त्वदंशजातान् सर्पांश्च हन्तियो मानवाधमः । ब्रह्महत्यासमंपापं भवितातस्य
मत्पादपद्मचिह्ने यः करोति दण्डताड़नम् । द्विगुणं ब्रह्महत्याया भविता तस्य
लक्ष्मीर्यास्यति तद्गेहाच्छापंदत्त्वा सुदारुणम् । वंशायुर्यशसांहानिर्भवितातस्य

ध्रुवं वर्षशतं कालसूत्रे यास्यति मद्गिरा ॥ ६६ ॥
त्वत्प्रमाणाः कीटसङ्घा दंशिष्यन्ति च सन्ततम् ।
भोगान्ते जन्म लब्ध्वा च तन्मृत्युर्वै हि दंशनात् ॥ ६७ ॥

तस्य वंशोद्भवानाञ्च त्वद्वंशाद्भविता भयम् । ये च त्वद्वंशजान् दृष्ट्वा सुपदाङ्क
प्रणमिष्यन्ति भक्त्याते मुच्यतेसर्वपातकात् । गच्छशीघ्रंरमणकंत्यज भीति
मत्पदाङ्कं मूर्ध्नि दृष्ट्वा त्वां भक्त्या प्रणमिष्यति । तव त्वद्वंशजानाञ्च गरुड़ान्न
सर्वेषां ज्ञातिसर्पाणां वरोऽद्य भव मद्वरात् । वरं किं परमं वत्स वाञ्छितं
भयं त्यक्त्वा कथय मां त्वदीयं दुःखभञ्जनम् । श्रीकृष्णवचनंश्रुत्वाकालीयःक

पुटाञ्जलियुतो भूत्वा तमुवाच भुजङ्गमः ।

कालीय उवाच ।

वरोऽन्यस्मिन् मम विभो वाञ्छा नास्ति वरप्रद !॥ ७३ ॥

भक्तिस्मृतिं त्वत्पदाब्जेदेहिजन्मनि जन्मनि । जन्मब्रह्मकुले वापितिर्य्यग्योनि

तद्भवेत् सफलं यत्र स्मृतिस्त्वच्चरणाम्बुजे ।
तन्निष्फलः स्वर्गवासो नास्ति चेत् त्वत्पदस्मृतिः ॥ ७५ ॥

त्वत्पादध्यानयुक्तस्ययत्ततत्स्थानञ्चतत्परम् । क्षणं वाकोटिकल्पंवापुरुषायुः

यदि त्वत् सेवया याति सफलो निष्फलोऽथवा ।
तेषाञ्चायुर्व्ययो नास्ति ये त्वत्पादाब्जसेवकाः ॥ ७७ ॥

सन्ति जन्ममरणरोगशोकार्त्तिभीतयः । इन्द्रत्वे वामरत्वे वा ब्रह्मत्वे चातिदुर्लभे ॥
वाञ्छा नास्त्येव भक्तानां त्वत्पादसेवनं विना । सुजीर्णपटखण्डस्य समं नूतनमेव च

पश्यन्ति भक्ताः किञ्चान्यत् सालोक्यादिचतुष्टयम् ।
संप्राप्तस्त्वन्मनुर्ब्रह्मन्ननन्ताद् यावदेव हि ॥ ८० ॥

वत् त्वद्भावनेनैव त्वद्वर्णोऽहमनुग्रहात् । मां च भक्तमपक्वं वा विज्ञाय गरुड़ः स्वयम्
शाद् दूरञ्च न्यक्कारं चकार दृढ़भक्तिमान् । भवता च दृढ़ाभक्तिर्दत्ता मे वरदेश्वर ॥८२

स च भक्तश्च भक्तोऽहं न मां त्यक्तुं क्षमोऽधुना ।
त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम ॥ ८३ ॥

दोषंगुणयुक्तं मां सोऽधुना त्यक्तुमर्हति । ममाराध्याश्चनागेन्द्रा न तद्वध्योऽहमीश्वर
यं न केभ्यः सर्वत्र तमनन्तं गुरुं विना । यं देवेन्द्राश्च देवाश्च मुनयो मनवो नराः ॥

स्वप्ने ध्यानेन पश्यन्ति चक्षुषोर्गोचरः स मे ।
भक्तानुरोधात् साकारः कुतस्ते विग्रहो विभो ॥ ८६ ॥

गुणस्त्वञ्च साकारो निराकारश्च निर्गुणः । स्वेच्छामयः सर्वधामसर्वबीजं सनातनम्
सर्वेषामीश्वरः साक्षी सर्वात्मा सर्वरूपधृक् । ब्रह्मेशशेषधर्मेन्द्रा वेदवेदाङ्गपारगाः ॥८८

स्तोतुं यमीशं ते जाड्याः सर्पस्तोष्यति तं विभुम् ।
हे नाथ ! करुणासिन्धो ! दीनबन्धो ! क्षमाधमम् ॥८९ ॥
खलस्वभावादज्ञानात् कृष्ण ! त्वञ्चर्वितो मया ।
नास्त्रलक्ष्यो यथाकाशो न दृश्यान्तो न लंघ्यकः ॥ ९० ॥

स्पृश्यो हि न चावर्यस्तथा तेजस्त्वमेव च । इत्येवमुक्त्वा नागेन्द्रःपपात चरणाम्बुजे
ओमित्युक्त्वा हरिस्तुष्टः सर्वं तस्मै वरं ददौ । नागराजकृतं स्तोत्रं प्रातरुत्थाय यःपठेत्
वंश्यानाञ्चतस्यैव नागेभ्यो न भयंभवेत् । स नागशय्यां कृत्वैव स्वप्तुं शक्तःसदा भुवि
विषपीयूषयोर्भेदो नास्त्येव तस्य भक्षणे । नागग्रस्ते नागघ्राते प्राणान्ते विषभोजनात्

स्तोत्रश्रवणमात्रेण सुस्थो भवति मानवः । भूर्जे कृत्वा स्तोत्रमिदं कण्ठे वा

बिभर्त्ति यो भक्तियुक्तो नागेभ्योऽपि न तद्भयम् ।

यत्र गेहे स्तोत्रमिदं नागस्तत्र न तिष्ठति ॥ ९६ ॥

विषाग्निवज्रभीतिश्च न भवेत्तत्र निश्चितम् । इहलोके हरेर्भक्तिं स्मृतिश्च सततं

अन्ते च स्वकुलं पूत्वा दास्यञ्च लभते ध्रुवम् ।

श्रीनारायण उवाच ।

नागेन्द्राय वरं दत्त्वा पुनस्तं जगदीश्वरः ॥ ९८ ॥

उवाच मधुरं वाक्यं परिणामसुखावहम् ।

श्रीकृष्ण उवाच ।

गच्छ त्वञ्च रमणकं यथेन्द्रनगरं परम् ॥९९ ॥

सार्द्धं स्वगोष्ठ्या नागेन्द्र यमुनाजलवर्त्मना । श्रुत्वा नागो हरेराज्ञां स्तो

कदा द्रक्ष्यामि त्वत्पादपद्मं नाथेत्युवाच ह । प्रणम्यशतकृत्वश्चस्त्रियागोष्ठ्या

जगाम जलमार्गेण नागेन्द्रो विरहातुरः । यमुनाह्रदतोयञ्च बभूवामृतकल्पकम् ।

प्रसन्ना जन्तवः सर्वे बभूवुस्तेन नारद । गत्वा ददर्श भवनं यथेन्द्रनगरं परम् ।

आज्ञया च कृपासिन्धोर्निर्मितं विश्वकर्मणा ।

तत्र तस्थौ च नागेन्द्रः स्त्रिया पुत्रगणैः सह ॥ १०४ ॥

निःशङ्कोहर्षयुक्तश्च हरिभावनतत्परः । इत्येवं कथितं सर्वं हरेश्चरितमद्भुतम् ।

सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ।

सूत उवाच ।

महर्षेर्वचनं श्रुत्वा नारदो हर्षविह्वलः । ऋषिं पप्रच्छ सन्देहं सर्वसन्देहभञ्जनम्

१६ नारद उवाच ।

कथं विहाय कालीयः स्वपूर्वभवनं परम् । जगाम यमुनातीरं तन्मे ब्रूहि

श्रीनारायण उवाच ।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ॥ १०८ ॥

क्रु तं धर्मवक्त्रान्मे मलये सूर्य्यपर्वणि। कृष्णाख्यानप्रसङ्गेन सुप्रभापश्चिमे तटे॥
च्छ धर्मं पुलहः कथितं मुनिसंसदि। इदमाख्यानमाश्चर्य्यमुवाच तं कृपानिधिः॥
श्रुतं मयाविप्र निबोध कथयामि ते। शेषाज्ञया नागगणाः प्रतिसंवत्सरं भिया॥
र्तिकीपूर्णिमायान्तु कुर्वन्ति गरुड़ार्चनम्। पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिर्मुदा॥
करे च महातीर्थे सुस्नातो भक्तिसंयुतः। तस्य पूजाञ्च कालीयो न चकारात्यहंकृतः॥
पूजोपकरणं बलाद्भक्षितुमुद्यतः। चक्रुर्निवारणं नागा नीतिमूचुर्मदोद्धतम्॥११४॥
शक्ता वारणे ते चेत्याविर्भूतः खगेश्वरः। दृष्ट्वा खगेश्वरं नागा कालीयप्राणरक्षया॥
शक्त्या च युयुधुर्यावत्सूर्य्योदयं मुने। पक्षीन्द्रतेजसा सर्वे समुद्विग्नाः पलायिताः॥
न्तं शरणं जग्मुः सर्वेषामभयप्रदम्। पलायनपरान् दृष्ट्वा नागांश्च करुणानिधिः॥
तस्थौ च निःशङ्कः कालीयस्तं ददर्श ह। स्मृत्वा हरिपदाम्भोजं कालीयो युयुधेमुने
तश्च तयोर्युद्धं बभूवातीवदारुणम्। पराजितश्च नागेन्द्रस्तेजसा गरुड़स्य च॥११६
या पलायनं कृत्वा जगाम यमुनाह्रदम्। न तं सौभरिशापेन खगेन्द्रो गन्तुमीश्वरः॥
तत्र तस्थौ भिया नागो जग्मुः पश्चाच्च तद्गणाः॥ १२०॥

नारद उवाच।

तु सौभरेः शापो बभूव गरुडाय वै। कथं न शक्तो गन्तुं तं ह्रदयमीश्वरवाहनः॥

श्रीनारायण उवाच।

यं वर्षसहस्रञ्च वर्षाणां तत्र सौभरिः। तपस्तप्त्वा महासिद्धो दध्यौकृष्णपदाम्बुजम्
पे ध्यायमानस्य कूले च यमुनाजले। गणेन सार्द्धं निःशङ्कः करोति भ्रमणं मुदा॥
मुत्फाल्य बहुधा परितः परमेच्छया। मुनिं प्रदक्षिणीकृत्य यात्यायाति मुदान्वितः
लं सुमहात्मानं दर्शं दर्शं खगाधिपः। जग्राह चञ्चुना तूर्णं मुनीन्द्रस्य समीपतः॥
न्तं तं मीनमुखं ददर्श कोपचक्षुषा। प्रकोपतो मुनेर्दृष्ट्वा मीनस्तोये पपात ह॥
वाच मुनीन्द्रश्च पुनरादातुमुद्यतम्। मीनश्च गरुड़त्रासात्तस्थौ मुनिसमीपतः॥

सौभरिरुवाच।

दूरं गच्छ दूरं खगेन्द्र मत्समीपतः। का योग्यता मत्पुरस्ते ग्रहीतुं जीवमुल्बणम्

श्रीकृष्णवाहनंज्ञात्वाचात्मानंबहुमन्यसे। त्वद्विधान्कोटिशःकृष्णःस्रष्टुंशक्तः
करोमि भस्मसात्तूर्णं त्वाञ्च भ्रूभङ्गलीलया। वाहनञ्च त्वमीशस्य न वयं त
अद्यप्रभृति पक्षीन्द्र यद्यागच्छति मे ह्रदम्। मदीयशापात्तूर्णञ्च भस्मसाद्भवि
मुनीन्द्रस्य वचः श्रुत्वा प्रचचाल खगेश्वर। स्मारं स्मारं कृष्णपादं तं प्रणम्य
अद्यप्रभृति विप्रेन्द्र पतगेन्द्रस्य सन्ततम्। ह्रदस्यश्रुतिमात्रेण कम्पो भवति
इतिहासश्च कथितो यः श्रुतो धर्मवक्त्रतः। सरहस्यं श्रुतिसुखं प्रकृतं शृणु
विज्ञाय सुचिरं बाला नोत्तस्थौ तज्जलाद्धरिः। चक्रुर्विषादं मोहाच्च रुरुदुः

स्ववक्षो घातनञ्चक्रुः केचिद्बालाः शुचाकुलाः।
केचिन्निपत्य भूमौ च मूर्च्छां प्रापुर्हरिं विना ॥ १३६ ॥

ह्रदं प्रवेष्टुं केचिच्च विरहेण समुद्यताः। केचिद्गोपालबालाश्च चक्रुश्च तत्र
कृत्वा विलापं केचिच्च प्राणांस्त्यक्तुं समुद्यताः। तेषां केचिज्ज्ञानवन्तो रक्षां
केचिदूचुश्च हाहेति कृष्ण कृष्णेति केचन। केचिद्वक्तुं प्रवृत्तिश्च प्रयुयुर्नन्द

केचित्सम्मीलितास्तत्र शोकमोहभयातुराः।
इत्यूचुः किं करिष्यामः कुतोऽस्माकं गतो हरिः ॥ १४० ॥
हे नन्दसूनो हे कृष्ण प्राणेभ्योऽप्यधिकप्रिय।
हे बन्धो दर्शनं देहीत्यूचुः प्राणाः प्रयान्ति हि ॥ १४१ ॥

एतस्मिन्नन्तरे केचिद्बालका नन्दसन्निधिम्। संप्रापुरतिलोलाश्च रुदन्तः शो
प्रवृत्तिमूचुस्तं शीघ्रं यशोदां मूलतो बलम्। गोपान्गोपालिकाश्चैवरक्षां
श्रुत्वावार्त्ताञ्च ते सर्वेशीघ्रं जग्मुः शुचान्विताः। कलिन्दनन्दिनीतीरं रुरुदु
गत्वासम्मीलिताःसर्वेरुरुदुः शोकमूर्च्छिताः। ह्रदं विशन्तीमम्बां तां केचिच्च
गोपा गोपालिकाश्चैव जघ्नुरङ्गानि शोकतः। केचिद्विललपुस्तत्र मूर्च्छां प्रा
ह्रदं विशन्तीं तां राधां वारयामास काञ्चन। मूर्च्छाञ्च प्रापसाशोकान्मृतेव

विलप्यातिभृशं नन्दो मूर्च्छां प्राप पुनः पुनः।
भूयोऽपि रोदनं कृत्वा भूयो मूर्च्छामवाप ह ॥ १४८ ॥

विलपन्तं भृशं नन्दं यशोदां शोककर्शिताम् ।
गोपांश्च गोपिकाश्चैव राधिकामतिमूर्च्छिताम् ॥ १४६ ॥
रुदतो बालकान् सर्वान् बालिकाश्च शुचान्विताः ।
सर्वांश्च बोधयामास बलश्च ज्ञानिनां वरः ॥ १५० ॥

श्रीबलदेव उवाच ।

ोपा गोपालिका बालाःसर्वेश्शृणुतमद्वचः । हे नन्द ज्ञानिनां श्रेष्ठगर्गवाक्यस्मृतिंकुरु ॥
जगद्विभर्तुः शेषस्य संहर्तुः शङ्करस्य च । विधातुः संविधातुश्च भुवि कस्मात्पराजयः
परमाणुः परो व्यूहः स्थूलात् स्थूलः परात्परः ।
विद्यमानोऽप्यविद्दश्यः संयोगो योगिनामपि ॥ १५३ ॥
दिशां नास्ति समाहारः स्पृश्योनाकाश एव च ।
अपि सर्वेश्वरो बाध्य इत्यूचुः श्रुतयः स्फुटम् ॥ १५४ ॥
नात्मा दृश्यो नास्त्रलक्ष्यो न वध्यो न हि दृश्यकः ।
नाग्निग्रस्तो न हिंस्यश्चापीदमाध्यात्मिका विदुः ॥ १५५ ॥
विग्रहोऽस्यैव कृष्णस्य भक्तध्यानार्थमेव च ।
ज्योतिःस्वरूपस्य विभोर्नाद्यन्तमध्यमात्मनः ॥ १५६ ॥

लप्लुते च ब्रह्माण्डे जलशायी जनार्दनः । यन्नाभिपद्मजो ब्रह्मा तस्येशस्य ह्रदे विपत्
शकश्चेत् क्षमो ग्रस्तुं ब्रह्माण्डमखिलंपितः । न तथापि तदीशं तं ग्रस्तं सर्पः क्षमोभवेत्
त्येवं कथितं सर्वमाध्यात्मिकमनुत्तमम् । निगूढं योगिनां सारं संशयच्छेदकारणम्
लदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन् । तत्याज शोकं नन्दश्च व्रजाश्च व्रजयोषितः
बोधं मेनिरे सर्वे न यशोदा न राधिका । बन्धुविच्छेदविषये प्रबोधेन स्थितं मनः ॥
तस्मिन्नन्तरे कृष्णमुत्पतन्तं जलान्मुने । ददृशुस्तं सुप्रसन्ना व्रजाश्च व्रजयोषितः॥१६२
रत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम् । अक्लिग्धवस्त्रमस्निग्धमलुप्तचन्दनाञ्जनम् ॥
र्वाभरणसंयुक्तं ज्वलन्तं ब्रह्मतेजसा । मयूरपिच्छचूडश्च वंशीवदनमच्युतम् ॥१६४ ॥
शोदा बालकं दृष्ट्वा कृत्वा वक्षसि संस्मृता । चुचुम्ब वदनाम्भोजं प्रसन्नवदनेक्षणा ॥

क्रोड़े चकार नन्दश्च बलश्च रोहिणी मुदा। निमेषरहिताः सर्वे ददृशुः श्री
प्रमान्धा बालका सर्वे चक्रुरालिङ्गनं हरेः। पपुश्चक्षुश्चकोरैश्च मुखचन्द्रञ्च गो
एतस्मिन्नन्तरे तत्र सहसा काननान्तरम्। दावाग्निर्वेष्टयामास तैः सर्वैः सहगो
दृष्ट्वा शैलप्रमाणाग्निं परितः काननान्तरे। प्रणाशं मेनिरे सर्वे भयमापुश्च
श्रीकृष्णंतुष्टुवुःसर्वे सम्पुष्टाञ्जलयो व्रजाः। बालागोप्यश्चसन्त्रस्ताभक्तिनम्रात्म

बाला ऊचुः।

यथा संरक्षितं ब्रह्मन् सर्वापत्स्वेव नः कुलम्। तथा रक्षां कुरु पुनर्दावाग्नेर्मधु
त्वमिष्टदेवतास्माकं त्वमेव कुलदेवता। स्रष्टा पाता च संहर्त्ता जगताञ्च ज
वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य्य एव वा। यमःकुबेरःपवन ईशानाद्याश्च दे
ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः। मानवाश्च तथा दैत्या यक्षराक्षस
ये ये चराचराश्चैव सर्वे तव विभूतयः। आविर्भावस्तिरोभावः सर्वेषाञ्च तवे
अभयं देहि गोविन्द वह्निसंहरणं कुरु। वयं त्वां शरणं यामो रक्ष नः शरणा
इत्येवमुक्त्वाते सर्वे तस्थुर्ध्यात्वापदाम्बुजम्। दूरीभूतस्तुदावाग्निःश्रीकृष्णामृ
दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः। सर्वापदः प्रणश्यन्ति हरिस्मरण
इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत्। वह्नितो न भवेत्तस्य भयं जन्मनि
शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे। स्तोत्रमेतत् पठित्वा तु मुच्यतेना
शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत्। इह लोके हरेर्भक्तिमन्तेदास्यं ल

श्रीनारायण उवाच।

दावाग्निमोक्षणं कृत्वा तैः सार्द्धं शृणु नारद। जगाम श्रीहरिर्गेहं कुवेरभव
ब्राह्मणेभ्यो धनं नन्दः परिपूर्णंददौ मुदा। भोजनं कारयामास ज्ञातिवर्गाश्च
नानाविधं मङ्गलञ्च हरेर्नामानुकीर्त्तनम्। वेदांश्च पाठयामास विप्रद्वारा मुद
एवं मुमुदिरे सर्वे वृन्दारण्ये गृहे गृहे। श्रीकृष्णचरणाम्भोजध्यानैकतानम
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम्। कलिकिल्विषकाष्ठानां दहने दह

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कालीयदमनदावाग्निमोक्षणं नामैकोनविंशोऽध्यायः

# विंशोऽध्यायः

## ब्रह्मणा गोवत्सादिहरणम् ।

श्रीनारायण उवाच ।

एकदा बालकैः सार्धं बलेन सह माधवः ।
भुक्त्वा पीत्वानुलिप्तश्च वृन्दारण्यं जगाम ह ॥ १ ॥
क्रीड़ाञ्चकार भगवान् कौतुकेन च तैः सह ।
क्रीड़ानिमग्नचित्तानां दूरं तद् गोकुलं ययौ ॥ २ ॥
तस्य प्रभावं विज्ञातुं विधाता जगताम्पतिः ।
जहार गाश्च सर्वाश्च वत्सांश्च बालकानपि ॥ ३ ॥
ज्ञाय तदभिप्रायं सर्वज्ञः सर्वकारकः । पुनश्चकार तत्सर्वं योगीन्द्रो योगमायया ॥४॥
गाम श्रीहरिर्गेहं चारयित्वा च गोकुलम् । बलेन बालकैः सार्धं क्रीड़ाकौतुकमानसः
वं चकार भगवान् वर्षमेकञ्च प्रत्यहम् । यमुनागमनं गोभिर्बलेन सह बालकैः ॥ ६ ॥
ह्मा प्रभावं विज्ञाय लज्जानम्रात्मकन्धरः । आजगाम हरेः स्थानं भाण्डीरवटमूलके ॥
दर्श कृष्णं तत्रैव गोपालगणवेष्टितम् । यथा पार्वणचन्द्रञ्च विभान्तं भगणैः सह ॥८॥
नसिंहासनस्थञ्च हसन्तं सस्मितं मुदा । पीतवस्त्रपरीधानं ज्वलन्तं ब्रह्मतेजसा ॥६॥
केयूरवलयरत्नमञ्जीररञ्जितम् । रत्नकुण्डलयुग्माभ्यां स्वकपोलस्थलोज्ज्वलम् ॥१०॥
टिकन्दर्पलावण्यं लीलाधाम मनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमार्चितविग्रहम् ॥११
पारिजातप्रसूनानां मालाजालैर्विभूषितम् ।
नवीननीरदश्यामं प्रोद्भिन्नवयौवनम् ॥ १२ ॥
लतीमाल्यसंयुक्तं मयूरपिच्छचूड़कम् । स्वाङ्गसौन्दर्य्यदीप्त्या च कृतभूषणभूषितम् ॥
त्पार्वणचन्द्रस्य प्रभामुष्टास्यसुन्दरम् । पक्वबिम्बाधरौष्ठञ्च खगेन्द्रचञ्चुनासिकम् ॥
न्मध्याह्नपद्मानां प्रभामोचनलोचनम् । मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहरम् ॥

कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ।
शान्तञ्च राधिकाकान्तं परिपूर्णतमं परम् ॥ १६ ॥

एवंभूतं प्रभुं दृष्ट्वा प्रणनामातिविस्मितः । दर्शं दर्शमीश्वरं तं प्रणनाम पुनः पुन
यद् दृष्टं हृदयाम्भोजे तद्रूपं बहिरेव च । या मूर्त्तिः पुरतो दृष्टा सा पश्चात्परि
तत्र वृन्दावने सर्वं दृष्ट्वा कृष्णसमं मुने । ध्यायं ध्यायञ्च तद्रूपं तत्र तस्थौ ज
गावो वत्साश्च बालाश्च लता गुल्माश्च वीरुधः । सर्वं वृन्दावनं ब्रह्मा श्यामसुं
दृष्ट्वैवं परमाश्चर्यं पुनर्ध्यानञ्चकार ह । ददर्श त्रिजगद् ब्रह्मा नान्यत् कृष्णं

क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः ।
क्व देवाः क्व च गन्धर्वा मुनीन्द्राः क्व च मानवाः ॥ २२ ॥
क्व चात्मा क्व जगद्बीजं क्व स्वर्गाः गाव एव च ।
सर्वञ्च स्वदृशा ब्रह्मा ददर्श मायया हरेः ॥ २३ ॥
क्व कृष्णो जगतां नाथः क्व वा मायाविभूतयः ।
सर्वं कृष्णमयं दृष्ट्वा किञ्चिन्निर्वक्तुमक्षमः ॥ २४ ॥
किं स्तौमि किं करोमीति मनसैवं प्रगृह्य च ।
तत्र स्थित्वा जगद्धाता जपं कर्तुं समुद्यतः ॥ २५ ॥

सुखं योगासनं कृत्वा बभूव सम्पुटाञ्जलिः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽ
इड़ां सुषुम्नां मध्याञ्च पिङ्गलां नलिनीन्धुराम् । नाड़ीषट्कञ्च योगेन निबध्य
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् । विशुद्धं परमाज्ञाख्यं षट्चक्रञ्च
लङ्घनं कारयित्वा च तं षट्चक्रं क्रमाद्विधिः । ब्रह्मरन्ध्रं समानीय वायुपूर्ण

निबध्य वायुं मध्यान्तामानीय हृदयाम्बुजम् ।
तं वायुं भ्रमयित्वा च योजयामास मध्यया ॥ ३० ॥

एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा । जजाप परमं मन्त्रं तस्यैव
मुहूर्त्तञ्च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम् । ददर्श हृदयाम्भोजे सर्वतेजो
तत्तेजसोऽन्तरे रूपमतीव सुमनोहरम् । द्विभुजं मुरलीहस्तं भूषितं पीतवास

तिमूलस्थलन्यस्तज्वलन्मकरकुण्डलम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥३४
दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च । दृष्ट्वा च परमाश्चर्य्यं तुष्टाव परमेश्वरम् ॥
स्तोत्रञ्च पुरा दत्तं हरिणैकार्णवे मुने । तमीशं तेन विधिना भक्तिनम्रात्मकन्धरः

ब्रह्मोवाच ।

सर्वस्वरूपं सर्वेशं सर्वकारणकारणम् ।
सर्वानिर्वचनीयं तं नमामि शिवरूपिणम् ॥ ३७ ॥

वीनजलदाकारं श्यामसुन्दरविग्रहम् । स्थितं जन्तुषु सर्वेषु निर्लिप्तं साक्षिरूपिणम् ॥
आत्मारामं पूर्णकामं जगद्व्यापि जगत्परम् । सर्वस्वरूपं सर्वेषां वीजरूपं सनातनम्
र्वाधारं सर्ववरं सर्वशक्तिसमन्वितम् । सर्वाराध्यं सर्वगुरुं सर्वमङ्गलकारणम् ॥४० ॥
र्वमन्त्रस्वरूपञ्च सर्वसम्पत्करं वरम् । शक्तियुक्तमयुक्तञ्च स्तौमिस्वेच्छामयं विभुम् ॥
क्तीशं शक्तिवीजञ्च शक्तिरूपधरं वरम् । संसारसागरे घोरे शक्तिनौकासमन्वितम् ॥

कृपालुं कर्णधारञ्च नमामि भक्तवत्सलम् ।
आत्मस्वरूपमेकान्तं लिप्तं निर्लिप्तमेव च ॥ ४३ ॥
सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् ।
सर्वेन्द्रियाधिदेवं तमिन्द्रियालयमेव च ॥ ४४ ॥

र्वेन्द्रियस्वरूपञ्च विराड्रूपं नमाम्यहम् । वेदं च वेदजनकं सर्ववेदाङ्गरूपिणम् ॥४५॥
र्वमन्त्रस्वरूपञ्च नमामि परमेश्वरम् । सारात्सारतरं द्रव्यमपूर्वमनिरूपिणम् ॥ ४६ ॥
वतन्त्रमस्वतन्त्रञ्च यशोदानन्दनं भजे । शान्तं सर्वशरीरेषु तमदृष्टमनूहकम् ॥ ४७ ॥

ध्यानासाध्यं विद्यमानं योगीन्द्राणां गुरुं भजे ।
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ॥ ४८ ॥

पीभिः सेव्यमानञ्च तं राधेशं नमाम्यहम् । सतां सदैव सन्तन्तमसन्तमसतामपि ॥
गीशं योगसाध्यञ्च नमामि शिवसेवितम् । मन्त्रबीजं मन्त्रराजं मन्त्रदं फलदं फलम्
न्त्रसिद्धिस्वरूपं तं नमामि च परात्परम् । सुखं दुःखञ्च सुखदं दुःखदं पुण्यमेव च ॥
ण्यप्रदञ्च शुभदं शुभबीजं नमाम्यहम् । इत्येवं स्तवनं कृत्वा दत्त्वा गाश्च सबालकान्

निपत्य दण्डवद् भूमौ रुरोद प्रणनाम च। ददर्श चक्षुरुन्मील्य विधाता जगतां

ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्।

इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम्॥ ५४॥

लभते दास्यमतुलं स्थानमीश्वरसन्निधौ। लब्ध्वा च कृष्णसान्निध्यं पार्षद

श्रीनारायण उवाच।

गते जगत्कारणे च ब्रह्मलोके च ब्रह्मणि। श्रीकृष्णो बालकैः सार्धं जगामस्वा

गावो वत्साश्च बालाश्च जग्मुर्वर्षान्तरे गृहम्। श्रीकृष्णमायया सर्वे मेनिरे ते

गोपा गोपालिकाः किञ्चित् तर्कितुं न क्षमास्तदा।

योगिनः कृत्रिमं सर्वं किं नूतनं वा पुरातनम्॥ ५८॥

इत्येवं कथितं सर्वं श्रीकृष्णचरितं शुभम्। सुखदं मोक्षदं पुण्यं सर्वकालसुख

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे

गोवत्सबालकहरणप्रस्तावो नाम विंशोऽध्यायः।

---

## एकविंशोऽध्यायः

### इन्द्रयागवर्णनम्।

श्रीनारायण उवाच।

एकदानन्दयुक्तश्च नन्दगोपो व्रजे मुने। दुन्दुभिं वादयामास शक्रयागकृतोद्य

दधि क्षीरं घृतं तक्रं नवनीतं गुडं मधु। एतान्यादाय शक्रस्य पूजां कुर्वन्तु

ये ये सन्त्यत्र नगरे गोपा गोप्यश्च बालकाः।

बालिकाश्च द्विजा भूयो वैश्याः शूद्राश्च भक्तितः॥ ३॥

इत्येवं श्रावयित्वा च स्वयमेव मुदान्वितः। यष्टिमारोपयामास रम्यस्थाने शु

ददौ तत्र क्षौमवस्त्रं मालाजालं मनोहरम्। चन्दनागुरुकस्तूरीकुङ्कुमद्रवमेव

स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी ।
उवास स्वर्णपीठे च प्रक्षालितपदाम्बुजः ॥ ६ ॥
नाप्रकारपात्रैश्च ब्राह्मणैश्च पुरोहितैः । गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः
तस्मिन्नन्तरे तत्राजग्मुर्नगरवासिनः । महासम्भृतसम्भारा नानोपायनसंयुताः ॥ ८ ॥
जग्मुर्मुनयः सर्वे ज्वलन्तो ब्रह्मतेजसा । शान्ताः शिष्यगणैः सार्द्धं वेदवेदाङ्गपारगाः
र्गश्च गालवश्चैव शाकल्यःशाकटायनः । गौतमःकरुषःकण्वो वात्स्यःकात्यायनस्तथा
भरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः । ऋष्यश्रृङ्गो गौरमुखो भरद्वाजश्च वामनः ॥
ष्णद्वैपायनः श्रृङ्गी सुमन्तुर्जैमिनिः कचः । पराशरश्च मैत्रेयो वैशम्पायन एव च ॥
ब्राह्मणाश्च कतिविधा भिक्षुका वन्दिनस्तथा ।
भूपा वैश्याश्च शूद्राश्च समाजग्मुर्महोत्सवे ॥ १३ ॥
दृष्ट्वा मुनीन्द्रान् नन्दश्च ब्राह्मणान् भूमिपांस्तथा ।
स्वर्णपीठात् समुत्तस्थौ व्रजाश्चोत्तस्थुरेव च ॥ १४ ॥
प्रणम्य वासयामास मुनीन्द्रान् विप्रभूमिपान् ।
तेषामनुमतिं प्राप्य तत्रोवास पुनर्मुदा ॥ १५ ॥
कश्च यष्टिनिकटे कर्त्तुमाज्ञाञ्चकार ह । पाकप्राज्ञं ब्राह्मणानां शतमानीय सादरम् ॥१६
त्र रत्नप्रदीपाश्च जज्वलुः परितस्तथा । अन्धीभूतञ्च धूपेन स्थानं तत् सुरभीकृतम् ॥
नाविधानि पुष्पाणि माल्यानि विविधानि च । नैवेद्यञ्च बहुविधमपूर्वं सुमनोहरम्
ललड्डुकपूर्णञ्च मण्डकानां सहस्रकम् । स्वस्तिकैः परिपूर्णञ्च यष्टिस्थानञ्च नारद ॥
लशानां सहस्रञ्च पूर्णं शर्करया मुने !। यवगोधूमचूर्णानां लड्डुकैर्मधुरैर्वरैः ॥ २० ॥
तपक्वैर्विप्रकृतैः पूर्णानि कलशानि च । वृक्षपक्वानि रम्याणि चारुरम्भाफलानि च
लानि परिपक्वानि कालदेशोद्भवानि च । क्षीराणां कुम्भलक्षाणिदध्नां तावन्तिनारद
धूनां कुम्भशतकं सर्पिः कुम्भसहस्रकम् । कलशानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम्
घटानां पञ्चलक्षाणि गुडपूर्णानि निश्चितम् ।
विष्णुतैलेन पूर्णञ्च कलशानां सहस्रकम् ॥ २४ ॥

वृषेन्द्राश्च बहुविधा भोगार्हद्रव्यवाहकाः । नानाविधानि पात्राणि सौवर्णराज
स्वर्णपीठानि च ब्रह्मन्नाजग्मुर्यष्टिसन्निधिम् ।
वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ॥ २६ ॥
नानाविधानि वाद्यानि चारूणि मधुराणि च ।
वादकाः स्वरयन्त्राणि वादयामासुरुत्सवे ॥ २७ ॥
छागलानां सहस्राणि महिषाणां शतानि च । मेषकाणाञ्च लक्षाणि ह्यानयामा
शतान्येव गण्डकानामाजग्मुर्यष्टिसन्निधिम् ।
प्रोक्षितानि च सर्वाणि रक्षितानि च रक्षकैः ॥ २९ ॥
बालकानां बालिकानां वृक्षाणां वृक्षयोषिताम् ।
युवानां युवतीनाञ्च संख्यां कर्त्तुञ्च कः क्षमः ॥ ३० ॥
गायकानाञ्च सङ्गीतं नर्त्तकानाञ्च नर्त्तनम् । श्रुत्वा दृष्ट्वा जनाः सर्वे मुमुहुः मुहु
रम्भोर्वशी मेनका च घृताची मोहिनी रती । प्रभावती भानुमती विप्रचित्तिस्ति
चन्द्रप्रभा सुप्रभा च रत्नमाला मदालसा । रेणुका रमणी ब्रह्मन्नेता आजग्मु
तासां नृत्येनगीतेन स्तनास्यश्रोणिदर्शनात् । रूपेणवक्रदृष्ट्याच मूर्च्छां प्रापु
एतस्मिन्नन्तरे शीघ्रमाजगाम हरिः स्वयम् । गोपालबालकैः सार्धं बलेन ब
दृष्ट्वा तञ्च जनाः सर्वे सम्भ्रान्ता हर्षविह्वलाः । उत्तस्थुराराद्गीताश्च पुलकाङ्कि
क्रीडास्थानात् समायान्तं शान्तं सुन्दरविग्रहम् ।
विनोदमुरलीवेणुश्रृङ्गशब्दसमन्वितम् ॥ ३७ ॥
सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च । चन्दनागुरुपङ्केन चर्चितं श्यामविग्रह
शरन्मध्याह्नपद्मास्यं पश्यन्तं रत्नदर्पणे । चारुचन्दनचन्द्रेण कस्तूरीबिन्दुना
शशाङ्केनयथाकाशंभालमध्यविराजितम् । मालतीमालयाश्यामकण्ठवक्षःस्थ
वकपङ्क्त्या यथाकाशंशारदीयं सुनिर्मलम् । चारुणापीतवस्त्रेणशोभितं श्या
विभान्तं विद्युता शश्वन्नवीनं नीरदं यथा ।
कुन्दप्रसूनैर्गुञ्जाभिर्वद्धवक्रिमचूडकम् ॥ ४२ ॥

थेन्द्रधनुषा भाति विभान्तं भगणैर्नभः। रत्नकुण्डलदीप्त्याचस्मितवक्त्रं सुशोभितम्
शरत्प्रफुल्लपद्मञ्च द्युमणेः किरणैर्यथा ॥ ४३ ॥
प्रक्षत्रियवैश्याश्च मुनयो वल्लवा मुने। प्रणम्य वासयामासू रत्नसिंहासने शुभे॥४४॥
वास रत्नपीठे स तेषां मध्ये जगत्पतिः। यथा बभौ शरच्चन्द्रो ज्योतिषामन्तरे च खे
श्रुत्वा तमुचूस्ते सर्वे जगतामीश्वरं परम् ॥ ४५ ॥
च्छामयं गुणातीतं ज्योतीरूपं सनातनम्। दृष्ट्वा महोत्सवं शीघ्रमुवाच पितरं हरिः
सर्वेषां दुर्लभां नीतिं नीतिशास्त्रविशारदः ॥ ४६ ॥

श्रीकृष्ण उवाच।

भो वल्लवराजेन्द्र किं करोषीह सुव्रत। आराध्यः कश्चका पूजाकिं फलं पूजनेभवेत्
फलेन साधनं किं वा कः साध्यः साधनेन च।
देवे रुष्टे भवेत् किं वा पूजायाः प्रतिबन्धके ॥ ४८ ॥
ो देवः किं ददाति फलमत्र परत्र किम्। काचिद्ददात्यत्र फलं परत्रे नेह काचन ॥
चिच्च नोभयत्रापि चोभयत्रापि काचन। अवेदविहिता पूजा सर्वहानिकरण्डिका ॥
यमधुना वा ते किमु वा पुरुषक्रमात्। दृष्टो देवस्त्वया कस्मिन्पूजेयं चानुसारिणी
साक्षात् खादति देवस्ते वा साक्षात् किं न खादति।
साक्षाद् भुङ्क्ते च यो देवः सुप्रशस्तं तदर्चनम् ॥ ५२ ॥
क्षात् खादति नैवेद्यं विप्ररूपी जनार्दनः। ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्वदेवताः ॥
तस्य देवपूजायां यो नियुक्तो द्विजार्चने। पूजिता ब्राह्मणायेन पूजिताः सर्वदेवताः
य दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति। भस्मीभूतश्च नैवेद्यं पूजनं निष्फलं भवेत् ॥
ाय देवनैवेद्यं दानात् ध्रुवमनन्तकम्। तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमन्दिरम्
दत्त्वा देवाय नैवेद्यं मूढो भुङ्क्ते स्वयं यदि।
दत्तापहारी देवस्वं भुक्त्वा च नरकं व्रजेत् ॥ ५७ ॥
दत्तं न भोक्तव्यं नैवेद्यञ्च विना हरेः। प्रशस्तं सर्वदेवेषु विष्णुनैवेद्यभोजनम् ॥५८॥
नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम्। सर्वेषाञ्च क्रममिदं ब्राह्मणानां विशेषतः

न दत्त्वा वस्तु देवायदत्तंविप्राय चेत्सुधीः । भुक्त्वा विप्रमुखेदेवास्तुष्टाः स्वर्गे
तस्मात् सर्वप्रयत्नेन विप्राणामर्चनं कुरु । प्रशस्तफलदातॄणामिह लोके परत्र
जपस्तपश्च पूजा वा यज्ञदानं महोत्सवम् ।
सर्वेषां कर्मणां सारं विप्रतुष्टिश्च दक्षिणा ॥ ६२ ॥
ब्राह्मणानां शरीरेषु तिष्ठन्ति सर्वदेवताः । पादेषु सर्वतीर्थानि पुण्यानि पादर
पादोदके च विप्राणांतीर्थतोयानि सन्तिच । तत्स्पर्शात् सर्वतीर्थेषुस्नानजन्यफ
नश्यन्ति भक्षणाद्रोगा भक्तिभावेन वल्लव । सप्तजन्मकृतात् पापान्मुच्यते नात्र
पापं पञ्चविधं कृत्वायो विप्रंप्रणमेद् द्विजः । स स्नातः सर्वतीर्थेषुसर्वपापात्
ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी । दर्शनान्मुच्यते पापादिति वेदे
अप्राज्ञो वाथ प्राज्ञो वा ब्राह्मणो विष्णुविग्रहः ।
प्रियाः प्राणाधिका विष्णोर्ये विप्रा हरिसेविनः ॥ ६८ ॥
द्विजानां हरिभक्तानां प्रभावो दुर्लभः श्रुतौ । येषां पादाब्जरजसा सद्यः पूता
तेषाञ्च पादचिह्नं यत्तीर्थं तत् परिकीर्त्तितम् । तेषाञ्च स्पर्शमात्रेण तीर्थपावं
आलिङ्गनात्सदालापात्तेषामुच्छिष्टभोजनात् । दर्शनात्स्पर्शनाच्चैवसर्वपापात्
भ्रमणे सर्वतीर्थानां यत्पुण्यं स्नानतोभवेत् । हरिदासस्य विप्रस्यतत् पुण्यं
ये विप्रा हरये दत्त्वा नित्यमन्नञ्च भुञ्जते । उच्छिष्टभोजनात्तेषां हरेर्दास्यं
न दत्त्वा हरये भक्त्या भुञ्जते चेद् भ्रमादपि ।
पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत् ॥ ७४ ॥
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः । आमान्नं हरये दत्त्वा पाकं कृत्वा
विप्रक्षत्रियवैश्यानां शालग्रामशिलार्चने । अधिकारो न शूद्राणां हरेरप्यर्चने
द्रव्याण्येतानि गोपेन्द्र विप्रेभ्यश्चेन्नदास्यति । भस्मीभूतानिसर्वाणि भविष्यन्ति
अन्नञ्च सर्वजीवेभ्यः पुण्यार्थंदातुमर्हति । दत्त्वा विशिष्टजीवेभ्यो विशिष्टफल
अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम् ।
शूद्राणां द्विगुणं पुण्यं वैश्येभ्योऽन्नं प्रदाय च ॥ ७६ ॥

वान्नंक्षत्रियेभ्योऽपिवैश्यानांद्विगुणंभवेत् । क्षत्रियाणां शतगुणंविप्रेभ्योऽन्नंप्रदायच
प्राणाञ्च शतगुणं शास्त्रज्ञे ब्राह्मणेफलम् । शास्त्रज्ञानां शतगुणं भक्तेविप्रे लभेद्ध्रुवम्
वान्नंहरये दत्त्वाभुङ्क्तेभक्त्याचसादरम् । विष्णवेविप्रभक्ताय दत्त्वादातुश्चयत्फलम्
फलं लभते नूनं भक्तब्राह्मणभोजने । भक्ते तुष्टे हरिस्तुष्टो हरौ तुष्टेच देवताः॥८३॥

भवन्ति सिद्धाः शाखाश्च यथा मूलनिषेचनात् ।
द्रव्याण्येतानि देवाय यद्येकस्मै प्रयच्छति ॥ ८४ ॥

देवाश्च रुष्टाश्चेद्देवैकः किं करिष्यति । अथवार्द्धञ्च वस्तूनां देहि गोवर्धनाय च ॥
वर्धयति नित्यं यस्तेन गोवर्धनः स्मृतः । गोवर्धनसमस्तातपुण्यवान्न महीतले ॥

नित्यं ददाति गोभ्यो यो नवीनानि तृणानि च ।
तीर्थस्नानेषु यत् पुण्यं यत् पुण्यं विप्रभोजने ॥ ८७ ॥

व्रतोपवासेषु सर्वेष्वेव तपःसु च । यत् पुण्यञ्च महादाने यत् पुण्यं हरिसेवने॥८८
: पर्यटने यत्तु सर्ववाक्येषु यद्भवेत् । यत् पुण्यं सर्वयज्ञेषु दीक्षायाञ्च लभेन्नरः ॥

तत् पुण्यं लभते प्राज्ञो गोभ्यो दत्त्वा तृणानि च ॥ ८९ ॥

वन्तीं तृणं यश्च गां वारयति कामतः । ब्रह्महत्या भवेत्तस्य प्रायश्चित्ताद्विशुध्यति॥
देवा गवामङ्गे तीर्थानि तत्पदेषु च । तद्गुह्येषु स्वयं लक्ष्मीस्तिष्ठत्येव सदा पितः
ष्पदाक्तमृदा यो हि तिलकं कुरुते नरः । तीर्थस्नातो भवेत्सद्यो जयस्तस्य पदे पदे

गावस्तिष्ठन्ति यत्रैव तत्तीर्थं परिकीर्त्तितम् ।
प्राणांस्त्यक्त्वा नरस्तत्र सद्यो मुक्तो भवेद्ध्रुवम् ॥ ९३ ॥

णानां गवामङ्गं यो हन्ति मानवाधमः । ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ॥

नारायणांशान् विप्रांश्च गाश्च ये घ्नन्ति मानवाः ।
कालसूत्रञ्च ते यान्ति यावच्चन्द्रदिवाकरौ ॥ ९५ ॥

वमुक्त्वा श्रीकृष्णो विरराम च नारद । आनन्दयुक्तो नन्दश्च तमुवाच स्मिताननः ॥

नन्द उवाच ।

र्षपरीयं पूजेति महेन्द्रस्य महात्मनः । सुवृष्टिसाधनीसाध्यं सर्वशस्यमनोहरम् ॥९७

शस्यानि प्राणिनां प्राणाः शस्याज्जीवन्ति जीविनः ।
पूजयन्ति व्रजस्थाश्च महेन्द्रं पुरुषक्रमात् ॥ ९८ ॥

महोत्सवो वत्सरान्ते निर्विघ्नाय शिवाय च । इत्येवं वचनं श्रुत्वा बलेन स

उच्चैर्जहास स पुनरुवाच पितरं मुदा ॥ ९९ ॥

श्रीकृष्ण उवाच ।

अहो श्रुतं विचित्रं ते वचनं परमाद्भुतम् । उपहास्यं लोकशास्त्रं वेदेष्वेव वि

निरूपणं नास्ति कुत्र शक्राद् वृष्टिः प्रजायते । अपूर्वं नीतिवचनं श्रुतमद्य मु

शृणु नीतिं श्रुतिमतां हे तात नानयं वदे । वचनं सामवेदोक्तं सन्तो जानन्ति

प्रश्नं कुरुष्व मन्त्रांश्च विविधानपि संसदि । ब्रुवन्तु परमार्थञ्च किमिन्द्राद्

सूर्य्याद्धि जायते तोयं तोयात् शस्यानि शाखिनः ।
तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः ॥ १०४ ॥

सूर्य्यग्रस्तश्च नीरश्च काले तस्मात्समुद्भवः । सूर्य्यो मेघादयः सर्वे विधात्रा

यत्राब्दे यो जलधरो गजश्चसागरो मतः । शस्याधिपोनृपो मन्त्रीविधात्रा

जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम् ।
अब्देऽब्देस्त्येव तत् सर्वं कल्पे कल्पे युगे युगे ॥ १०७ ॥

हस्ती समुद्रादादाय करेण जलमीप्सितम् । दद्याद् घनाय तद् दद्याद्वातेन प्रे

स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम् ।
ईशेच्छयाविर्भूतश्च न भवेत् प्रतिबन्धकम् ॥ १०९ ॥

भूतं भव्यं भविष्यच्च महत् क्षुद्रञ्च मध्यमम् । धात्रा निरूपितं कर्म केन ता

जगच्चराचरं सर्वं कृतं तेनेश्वराज्ञया । आदौ विनिर्मितं भक्ष्यं पश्चाज्जीव

अभ्यासात् स स्वभावो हि स्वभावात्कर्म एव च ।
जायते कर्मणाम्भोगो जीविनां सुखदुःखयोः ॥ ११२ ॥

यातनाजन्ममरणरोगशोकभयानि च । समुत्पत्तिविपद्भिया कविता वा य

पुण्यञ्च स्वर्गवासश्च पापं नरकसंस्थितिः । भुक्तिर्मुक्तिर्हरेर्दास्यं कर्मणा घ

सर्वेषां जनको हीशश्चाभ्यासः शीलकर्मणाम् ।
धातुश्च फलदाता च सर्वं तस्येच्छया भवेत् ॥ ११५ ॥
निर्मितो विराटेन तत्त्वानि प्रकृतिर्जगत् । कूर्मश्च शेषो धरणी चाब्रह्मस्तम्ब एव च
स्याज्ञया मरुत् कूर्मं धत्तेशेषं बिभर्त्तिसः । शेषो वसुन्धरां मूर्ध्नासाच सर्वञ्चराचरम्
स्याज्ञया सदा वाति जगत्प्राणो जगत्त्रये । तपतिभ्रमणं कृत्वा भूगोलं सुप्रभाकरः
त्यग्निः सञ्चरते मृत्युश्च सर्वजन्तुषु । बिभर्त्ति शाखिनः काले पुष्पाणिच फलानिच
स्वे स्वे स्थाने समुद्राश्च तूर्णं मज्जन्त्यधोऽधुना ।
तमीशं भज भक्त्या च शक्रः किं कर्तुमीश्वरः ॥ १२० ॥
ाण्डश्च कतिविधमाविर्भूतं तिरोहितम् । विधयश्च कतिविधा यस्य भ्रूभङ्गलीलया
त्योर्मृत्युः कालकालो विधातुर्विधिरेव सः । भज तं शरणं तातसतेरक्षां करिष्यति
ोऽष्टाविंशदिन्द्राणां पतने यदहर्निशम् । विधातुरेव जगतामष्टोत्तरशताधिकः ॥
मेषाद्यस्य पतनं निर्गुणस्यात्मनः प्रभोः । एवंभूते तिष्ठतीशे शक्रपूजा विडम्बनम् ॥
येवमुक्त्वा श्रीकृष्णो विरराम च नारद । प्रशशंसुश्च मुनयो भगवन्तं सभासदः ॥
दः सपुलको हृष्टः सभायां साश्रुलोचनः । आनन्दयुक्ता मनुजा यदि पुत्रैः पराजिताः
श्रीकृष्णाज्ञां समाज्ञाय चकार स्वस्तिवाचनम् ।
क्रमेण वरणं तत्र सर्वेषाञ्च चकार ह ॥ १२७ ॥
तस्य मुनीन्द्राणां चकार पूजनं मुदा । बुधानां ब्राह्मणानाञ्च गवां वह्नेश्च सादरम्
पूजासमाप्तौ च क्रतौ च सुमहोत्सवे । नानाप्रकारवाद्यानां बभूव शब्द उल्वणः ॥
शब्दः शङ्खशब्दो हरिशब्दो बभूव ह । वेदमङ्गलकाण्डश्च पपाठ मुनिपुङ्गवः ॥१३०॥
वन्दिनां प्रवरो डिण्डी कंसस्य सचिवः प्रियः ।
उच्चैः पपाठ पुरतो मङ्गलं मङ्गलाष्टकम् ॥ १३१ ॥
कृष्णः शैलान्तिकं गत्वा भिन्नां मूर्त्तिं विधाय च ।
वस्तु खादामि शैलोऽस्मि वरं वृण्वित्युवाच ह ॥ १३२ ॥
वाच नन्दं श्रीकृष्णः पश्य शैलं पितः पुरः । वरं प्रार्थय भद्रं ते भविता चेत्युवाच ह

हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स वल्लवः । द्रव्यं भुक्त्वा वरं दत्त्वा सोऽन्तर्धा

मुनीन्द्रान् ब्राह्मणांश्चैव भोजयित्वा च गोपपः ।

वन्दिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ ॥ १३५ ॥

मुनिभ्यो ब्राह्मणेभ्योऽपि दत्त्वा नन्दो मुदान्वितः ।

रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ ॥ १३६ ॥

रौप्यं वस्त्रं सुवर्णञ्च वरमश्वं मणिं तथा । भक्ष्यद्रव्यं बहुविधं वन्दिने

स्तुत्या नत्वा रामकृष्णौ मुनयो ब्राह्मणा ययुः ॥ १३७॥

ययुरप्सरसः सर्वा गन्धर्वाः किन्नरास्तथा । राजानो वल्लवाःसर्वे चागता

सर्वे प्रणम्य श्रीकृष्णं ययुः सादरपूर्वकम् ॥ १३८ ॥

एतस्मिन्नन्तरे शक्रः कोपप्रस्फुरिताधरः । मखभङ्गे बहुविधां निन्दां श्रुत्वा

मरुद्भिर्वारिदैः सार्द्धं रथमारुह्य सत्वरम् ॥ १३९ ॥

जगाम नन्दनगरं वृन्दारण्यं मनोहरम् । सर्वे देवा ययुः पश्चाद् युद्धशास्त्र

शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद । वायुशब्दैर्मेघशब्दैः सैन्यशब्दैर्भया

चकम्पे नगरं सर्वं नन्दो भयमवाप ह । भार्य्यां सम्बोध्य स्वगणमुवाच

रहःस्थलं समानीय नीतिशास्त्रविशारदः ॥ १४२ ॥

नन्द उवाच ।

हे यशोदे समागच्छ वचनं शृणु रोहिणि ।

रामकृष्णौ समादाय व्रज दूरं व्रजात् प्रिये ॥ १४३ ॥

बालका बालिका नार्यो यान्तु दूरं भयाकुलाः । बलवन्तश्चगोपालास्तिष्ठन्तु

पश्चाच्च निर्गमिष्यामो वयञ्च प्राणसङ्कटात् । इत्युक्त्वा वल्लवश्रेष्ठःसस्मार

पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ।

काण्वशाखोक्तस्तोत्रेण तुष्टाव श्रीशचीपतिम् ॥ १४६ ॥

नन्द उवाच ।

इन्द्रः सुरपतिः शक्रो दितिजः पवनाग्रजः । सहस्राक्षो भगाङ्गश्च कश्यपात्म

हेड़ौजाश्च शुनासीरोमरुत्वान् पाकशासनः। जयन्तजनकः श्रीमान् शचीशो दैत्यसूदनः
ज्रहस्तः कामसखो गौतमीव्रतनाशनः। वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः ॥
जेष्णुश्च वामनभ्राता पुरुहूतः पुरन्दरः। दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः ॥
ेखर्षभो कलारातिर्जम्भभेदी सुराश्रयः। संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥
ाखण्डलो हरिहयो नमुचिप्राणनाशनः। वृद्धश्रवा वृषश्चैव दैत्यदर्पनिषूदनः ॥१५२॥
षट्चत्वारिंशन्नामानि पापघ्नानि विनिश्चितम् ॥ १५३ ॥
तोत्रमेतत् कौथुमोक्तं नित्यं यदि पठेन्नरः। महाविपत्तौ शक्रस्तं वज्रहस्तश्च रक्षति ॥
तिवृष्टिशिलावृष्टि वज्रपाताच्चदारुणात्। कदाचिन्न भयं तस्य रक्षिता वासवःस्वयम्
त्र गेहे स्तोत्रमिदं यश्चजानाति पुण्यवान्। न तत्र वज्रपतनं शिलावृष्टिश्च नारद ॥

श्रीनारायण उवाच।

तोत्रं तन्दमुखाच्छ्रुत्वा चुकोप मधुसूदनः। उवाच पितरं नीतिं प्रज्वलन् ब्रह्मतेजसा
कं स्तौषि भीरो को वेन्द्रस्त्यज भीतिं ममान्तिके।
क्षणार्द्धं भस्मसात् कर्त्तुं क्षमोऽहमवलीलया ॥ १५८ ॥
ाश्चवत्सांश्च बालांश्च योषितो या भयातुराः। गोवर्द्धनस्य कुहरे संस्थाप्य तिष्ठ निर्भयम्
ालस्य वचनं श्रुत्वा तच्चकार मुदान्वितः। हरिर्दधार शैलन्तं वामहस्तेन दण्डवत् ॥
तस्मिन्नन्तरे तत्र दीप्तोऽपि रत्नतेजसा। अन्धीभूतश्च सहसा बभूव रजसावृतम् ॥
घातो मेघनिकरश्चच्छादगगनं मुने। वृन्दावने बभूवातिवृष्टिरेव निरन्तरम् ॥ १६२ ॥
लावृष्टिर्वज्रवृष्टिरुल्कापातः सुदारुणः। समस्तं पवतस्पर्शात् पतितं दूरतस्ततः ॥
फलस्तत्समारम्भो यथानीशोद्यमो मुने। दृष्ट्वा मोघश्च सत्सर्वं सद्यः शक्रश्चुकोप ह
ग्राहामोघकुलिशं दधीच्यस्थिविनिर्मितम्। दृष्ट्वा तं वज्रहस्तश्च जहास मधुसूदनः ॥
हस्तं स्तम्भयामास वज्रमेवातिदारुणम्। सहामरगणैर्मेघश्चकार स्तम्भनं विभुः ॥
सर्वे तस्थुर्निश्चलास्ते भित्तौ पुत्तलिका यथा।
हरिणा जृम्भितः शक्रः सद्यस्तन्द्रामवाप ह ॥ १६७ ॥
र्श सर्वं तन्द्रायां तत्र कृष्णमयं जगत्। द्विभुजं मुरलीहस्तं रत्नालङ्कारभूषितम् ॥

पीतवस्त्रपरीधानं रत्नसिंहासनस्थितम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्
चन्दनोक्षितसर्वाङ्गमेतत् सर्वं चराचरम् । दृष्ट्वाद्भुततमं तत्र सद्यो मूर्च्छामवाप
जजाप मन्त्रं तत्रैव प्रदत्तं गुरुणा पुरा । सहस्रदलपद्मस्थं ददर्श ज्योतिरुल्बणम्
तत्रान्तरे दिव्यरूपमतीवसुमनोहरम् । नवीनजलदोत्कर्षश्यामसुन्दरविग्रहम् ।
सद्रत्नसारनिर्माणं ज्वलन्मकरकुण्डलम् । ज्वलन्मणीन्द्रमकरकिरीटोज्ज्वलं

ज्वलता कौस्तुभेन्द्रेण कण्ठवक्षःस्थलोज्ज्वलम् ।
मणिकेयूरवलयमणिमञ्जीररञ्जितम् ॥ १७४ ॥
अन्तर्बहिः समं दृष्ट्वा तुष्टाव परमेश्वरम् ॥ १७५ ॥

इन्द्र उवाच ।

अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् । गुणातीतं निराकारं स्वेच्छामयम
भक्तध्यानाय सेवायै नानारूपधरं वरम् । शुक्लरक्तपीतश्यामं युगानुक्रमेण(णेन)
शुक्लतेजः स्वरूपञ्च सत्ये सत्यस्वरूपिणम् । त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्म
द्वापरे पीतवर्णञ्च शोभितं पीतवाससा । कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं
नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम् । नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुं
गोपिकाचेतनहरं राधाप्राणाधिकं परम् । विनोदमुरलीशब्दं कुर्वन्तं कौतु
रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् । कन्दर्पकोटिसौन्दर्य्यं बिभ्रन्तं शान्त

क्रीड़न्तं राधयासार्धं वृन्दारण्ये च कुत्रचित् ।
कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम् ॥ १८३ ॥

जलक्रीड़ां प्रकुर्वन्तं राधया सह कुत्रचित् । राधिकाकबरीभारं कुर्वन्तं कु
कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम् । राधाचर्विततताम्बूलं गृह्णन्तं कु
पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा । दत्तवन्तञ्च राधायै कृत्वा माला
कुत्रचिद्राधयासार्धं गच्छन्तं रासमण्डलम् । राधादत्तां गले मालां धृतवन्त

सार्धं गोपालिकाभिश्च विहरन्तञ्च कुत्रचित् ।
राधां गृहीत्वा गच्छन्तं विहाय ताश्च कुत्रचित् ॥ १८८ ॥

विप्रपत्नीदत्तमन्नं भुक्तवन्तश्च कुत्रचित् । भुक्तवन्तं तालफलं बालकैः सह कुत्रचित् ॥
वस्त्रं गोपालिकानाञ्च हरन्तं कुत्रचिन्मुदा । गवाङ्गणं व्याहरन्तं कुत्रचिद् बालकैः सह
कालीयमूर्ध्निपादाब्जं दत्तवन्तश्च कुत्रचित् । विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा ॥
गायन्तं रम्यसंगीतं कुत्रचिद् बालकैः सह । स्तुत्वा शक्रःस्तवेन्द्रेण प्रणनाम हरिं भिया
रा दत्तेन गुरुणा रणे वृत्रासुरेण च । कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥१६३॥
कादशाक्षरो मन्त्रः कवचं सर्वलक्षणम् । दत्तमेतत् कुमाराय पुष्करे ब्रह्मणा पुरा ॥

कुमारोऽङ्गिरसे दत्तो गुरवेऽङ्गिरसा मुने ।
इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ १६५ ॥

प्राप्य दृढां भक्तिमन्तेदास्यं लभेद् ध्रुवम् । जन्ममृत्युजराव्याधिशोकेभ्योमुच्यतेनरः
न हि पश्यति स्वप्नेऽपि यमदूतं यमालयम् ॥ १६६ ॥

नारायण उवाच ।

द्रस्य वचनं श्रुत्वा प्रसन्नः श्रीनिकेतनः । प्रीत्या तस्मै वरं दत्त्वा स्थापयामास पर्वतम्
प्रणम्य च हरिं शक्रः प्रययौ स्वगणैः सह ॥ १६७ ॥

रस्था जनाः सर्वे प्रजग्मुर्गह्वराद् गृहम् । ते सर्वे मेनिरे कृष्णं परिपूर्णतमं विभुम् ॥
पुरस्कृत्य व्रजस्थांश्च प्रययौ स्वालयं हरिः ॥ १६८ ॥

ाच नन्दः पुत्रं तं पूर्णब्रह्म सनातनम् । पुलकाङ्कितसर्वाङ्गो भक्तिपूर्णाश्रुलोचनः ॥

नन्द उवाच ।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
द्धिताय कृष्णाय गोविन्दाय नमोनमः । नमो ब्रह्मण्यदेवाय ब्रह्मणे परमात्मने ॥
तकोटिब्रह्माण्डधामधाम्ने नमोऽस्तुते । नमो मत्स्यादिरूपाणां जीवरूपायसाक्षिणे
निर्लिप्ताय निर्गुणाय निराकाराय ते नमः ॥ २०१ ॥
सूक्ष्मस्वरूपाय स्थूलात्स्थूलतमाय च । सर्वेश्वराय सर्वाय तेजोरूपाय ते नमः
अतिसूक्ष्मस्वरूपाय ध्यानासाध्याय योगिनाम् ।
ब्रह्मविष्णुमहेशानां वन्द्याय नित्यरूपिणे ॥ २०३

धाम्ने चतुर्णां वर्णानां युगेष्वेव चतुर्षु च। शुक्लरक्तपीतश्यामाभिधानगुण
योगिने योगरूपाय गुरवे योगिनामपि। सिद्धेश्वराय सिद्धाय सिद्धानां गुर
यं स्तोतुमक्षमो ब्रह्मा विष्णुर्यंस्तोतुमक्षमः। यंस्तोतुमक्षमो रुद्रःशेषो यं स्तो
यं स्तोस्तुमक्षमो धर्मो यंस्तोतुमक्षमोरविः। यंस्तोतुमक्षमो लम्बोदरश्चापि
यं स्तोतुमक्षमाः सर्वे मुनयः सनकाद्यः। कपिलो न क्षमःस्तोतुं सिद्धेन्द्राणां
न शक्तौ स्तवनं कर्त्तुं नरनारायणावृषी। अन्ये जड़धियः केवास्तोतुंशका
वेदा न शक्ता नोवाणी नच लक्ष्मीःसरस्वती। नराधास्तवने शक्ता किंस्तुवन्ति
क्षमस्व निखिलं ब्रह्मन्नपराधं क्षणे क्षणे। रक्ष मां करुणसिन्धो दीनवन्धो
पुरा तीर्थे तपस्तप्त्वा पुत्रः प्राप्तः सनातनः। स्वकीयचरणाम्भोजे भक्तिं दास्

ब्रह्मत्वममरत्वं वा सालोक्यादिकमेव वा।
त्वत्पदाम्भोजदास्यस्य कलां नार्हन्ति षोड़शीम् ॥ २१३ ॥
इन्द्रत्वं वा सुरत्वं वा संप्राप्तिं सिद्धिस्वर्गयोः।
राजत्वं चिरजीवित्वं सुधियो गणयन्ति किम् ॥ २१४ ॥

एतद्यत् कथितं सर्वं ब्रह्मत्वादिकमीश्वर। भक्तसङ्गक्षणार्द्धस्य नोपमा ते
त्वद्भक्तोयस्त्वत्सदृशः कस्त्वां तर्कितुमीश्वरः। क्षणार्द्धालापमात्रेण पारंकर्तुं
भक्तसङ्गाद्भवत्येव भक्तिं कर्त्तुमनेकधा। त्वद्भक्तजलदालापजलसेकेन वर्द्धते

अभक्तालापतापात्तु शुष्कतां याति तत्क्षणम्।
तद्गुणस्मृतिसेकाच्च वर्द्धते तत्क्षणे स्फुटम् ॥ २१८ ॥

त्वद्भक्त्यङ्कुरमुद्भूतं स्फीतं मानसजं परम्। न नश्यं वर्द्धनीयञ्च नित्यं नित्यं
ततः सम्प्राप्य ब्रह्मत्वं भक्तस्य जीवनाय च। ददात्येव फलं तस्मै हरिदास्य
संप्राप्य दुर्लभं दास्यं यदि दासो बभूव ह। सुनिश्चयेन तेनैव जितं सर्वं भ
इत्येवमुक्त्वा भक्त्याच नन्दस्तस्थौहरेः पुरः। प्रसन्नवदनः कृष्णोददौ तस्मै

एवं नन्दकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्।
सुदृढ़ां भक्तिमाप्नोति सद्यो दास्यं लभेद्धरेः ॥ २२३ ॥

तपस्तप्त्वा यदा द्रोणस्तीर्थे च धरया सह ।
स्तोत्रं तस्मै पुरा दत्तं ब्रह्मणा तत् सुदुर्लभम् ॥ २२४ ॥
हरेः षड़क्षरो मन्त्रः कवचं सर्वरक्षणम् । इह सौभरिणा दत्तं तस्मै तुष्टेन पुष्करे ॥
तदेव कवचं स्तोत्रं स च मन्त्रः सुदुर्लभः । ब्रह्मणोंऽशेन मुनिना नन्दाय च तपस्यते ॥
मन्त्रः स्तोत्रञ्च कवचमिष्टदेवो गुरुस्तथा ।
या यस्य विद्या प्राचीना न तां त्यजति निश्चितम् ॥ २२७ ॥
इत्येवं कथितं स्तोत्रं श्रीकृष्णाख्यानमद्भुतम् । सुखदं मोक्षदं सारं भवबन्धविमोचनम्

इति श्री ब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे इन्द्रयागभञ्जनं नामैकविंशतितमोऽध्यायः ।

---

## द्वाविंशोऽध्यायः

### धेनुकासुरोपाख्यानवर्णनम् ।

श्रीनारायण उवाच ।

कदा राधिकानाथो बलेन सह बालकैः । जगाम तत्तालवनं परिपक्वफलान्वितम् ॥१॥
क्षाणां रक्षिता दैत्यः खररूपी च धेनुकः । कोटिसिंहसमबलो देवानां दर्पनाशनः ॥
रीरं पर्वतसमं कूपतुल्ये च लोचने । ईषापङ्क्तिसमा दन्तास्तुण्डं पर्वतगह्वरम् ॥ ३ ॥
तहस्तपरिमिता जिह्वा लोला भयानका । कासारसदृशा नाभिः शब्दस्तस्य भयानकः
त्वा तालवनं बाला हर्षमापुरनिन्दिताः । कौतुकात् कृष्णमूचुस्ते स्मेराननसरोरुहाः ॥

बाला ऊचुः ।

कृष्ण करुणासिन्धो दीनबन्धो जगत्पते । महाबलबलभ्रातः समस्तबलिनां वर ॥
वधानं कुरु विभो क्षणार्द्धं नो निवेदने । क्षुधितानां शिशूनाञ्च भक्तानां भक्तवत्सल
स्वादूनि सुन्दराण्येव पश्य तालफलानि च ।

भङ्क्तुं चालयितुं वृक्षान् पातितुञ्च फलानि च ॥ ८ ॥
नानावर्णानि पुष्पाणि पक्वानि दुर्लभानि च ।
आज्ञां करोषि चेत् कृष्ण चेष्टां कर्त्तुं वयं क्षमाः ॥ ९ ॥

किन्त्वत्र दैत्यो बलवान् खररूपी च धेनुकः । अजितस्त्रिदशैः सर्वैर्महाबलप
दुर्निवार्य्यश्च सर्वेषां कंसस्य सचिवो महान् । हिंसकः सर्वजन्तूनां वनानामधि
सुविचार्य्य जगत्कान्त वद नो वदतां वर । युक्तं कार्य्यमयुक्तं वा कर्त्तव्यमय
बालकस्य वचः श्रुत्वा भगवान् मधुसूदनः । उवाच मधुरं बालान् वचनं तत्सु

श्रीकृष्ण उवाच ।

किं वो दैत्याद्भयं बाला यूयं मत्सहचारिणः ।
वृक्षान् भङ्क्त्वा चालयित्वा फलानि खादताभयम् ॥ १४ ॥

श्रीकृष्णाज्ञां समादाय बालका बलशालिनः । उत्पेतुर्वृक्षशिखरं क्षुधिताश्च
नानाप्रकारवर्णानि स्वादूनि सुन्दराणि च । फलानि पातयामासुः परिपक्वानि
केचिद् बभञ्जुर्वृक्षांश्च चालयामासुरेव । केचित् कोलाहलञ्चक्रुर्ननृतुस्तत्र के
अवरुह्य तरुभ्यश्च बालका बलशालिनः । फलान्यादाय गच्छन्तो ददृशुर्दैत्यपु
महाबलं महाकायं घोरं गर्दभरूपिणम् । आगच्छन्तं महावेगात् कुर्वन्तं शब्द
तं दृष्ट्वा रुरुदुः सर्वे फलानि तत्यजुर्भिया । कृष्ण कृष्णेति शब्दञ्च प्रचक्रुर्बहुधा

अस्मान् रक्ष समागच्छ हे कृष्ण करुणानिधे ।
हे सङ्कर्षण नो रक्ष प्राणा नो यान्ति दानवात् ॥ २१ ॥
हे कृष्ण हे कृष्ण हरे मुरारे गोविन्द दामोदर दीनबन्धो ।
गोपीश गोपेश भवार्णवेऽस्माननन्त नारायण रक्ष रक्ष ॥ २२ ॥
भयेऽभये वाथ शुभेऽशुभे वा सुखेषु दुःखेषु च दीननाथ ।
त्वया विनान्यं शरणं भवार्णवे न नोऽस्ति हे माधव रक्ष रक्ष ।

जय जय गुणसिन्धो कृष्णभक्तैकबन्धो बहुतरभययुक्तान् बालकान् रक्ष रक्ष
जहि दनुजकुलानामीशमस्माकमन्तं सुरकुलबलदर्पं वर्धयेमं निहत

[ब]ालानां विक्लवं दृष्ट्वा बलेन सह माधवः। आजगाम शिशुस्थानं भयहा भक्तवत्सलः॥
[भ]यंनास्तिभयंनास्तीत्युक्त्वादुद्रावसत्वरम्। ईषद्धास्यप्रसन्नास्योनिर्भयं दत्तवान्शिशून्
[दृ]ष्ट्वा कृष्णं बलं बाला ननृतुर्विजह्रुर्भयम्। हरिस्मृतिश्चाभयदा सर्वमङ्गलदायिका॥२७॥
[श्र]ीकृष्णो दानवं दृष्ट्वा ग्रसन्तं पुरतः शिशून्। बलं सम्बोध्य बलिनमुवाच मधुसूदनः

श्रीकृष्ण उवाच।

[दा]नवो बलिपुत्रोऽयं नाम्ना साहसिको बली। गर्दभो ब्रह्मशापेन शप्तो दुर्वाससा पुरा
[प]ापिष्ठो मम वध्योऽयं महाबलपराक्रमः। अहमेनं वधिष्यामि त्वं रक्ष बालकान् बल॥
आदाय बालकान् सर्वान् दूरं गच्छेत्युवाच ह।
तान् गृहीत्वा बलः शीघ्रं जगाम त्वरयाज्ञया॥ ३१॥
[दृ]ष्ट्वा कृष्णं दानवेन्द्रो महाबलपराक्रमः। जग्रास लीलया कोपाज्ज्वलदग्निशिखोपमम्॥
[ब]भूवातिदाहयुक्तो मर्तुकामोऽतितेजसा। उज्जग्रास पुनर्दैत्यो विभुं तेजस्विनं भिया॥
[उ]ज्झितं सन्ततमीशञ्च दृष्ट्वा दैत्यो मुमोच ह। अतीवसुन्दरं शान्तं ज्वलन्तं ब्रह्मतेजसा
[कृ]ष्णदर्शनमात्रेण बभूवास्य पुरा स्मृतिः। आत्मानं बुबुधे कृष्णं जगतां कारणं परम्
[ते]जःस्वरूपमीशन्तं दृष्ट्वा तुष्टाव दानवः। यथागमं यथा जन्म गुणातीतं श्रुतेः परम्॥

दानव उवाच।

[वा]मनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः। राज्यहर्ता च श्रीहर्ता सुतलस्थलदायकः॥
बलिभक्तिवशो वीरः सर्वेशो भक्तवत्सलः।
शीघ्रं त्वं हिंस मां पापं शापाद्गर्दभरूपिणम्॥ ३८॥
[मु]नेर्दुर्वाससः शापादीदृशं जन्म कुत्सितम्। मृत्युरुक्तश्च मुनिना त्वत्तो मम जगत्पतेः
[क्षु]रधारेण चक्रेण सुतीक्ष्णेनातितेजसा। जहि मां जगतां नाथ सद्भक्तिं कुरु मोक्षद॥
[त्व]मंशेन वराहश्च समुद्धर्त्तुं वसुन्धराम्। वेदानां रक्षिता नाथ हिरण्याक्षनिषूदनः॥
[त्व]ं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे। प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च॥
त्वञ्च वेदोद्धारकर्त्ता मीनांशेन दयानिधे।
नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः॥ ४३॥

शेषाधारश्च कूर्मस्त्वमंशेन सृष्टिहेतवे । विश्वाधारश्च शेषस्त्वमंशेनापि सह
रामो दाशरथिस्त्वञ्च जानक्युद्धारहेतवे । दशकन्धनिहन्ता च सिन्धौ सेतुवि
कलया पर्शुरामश्च जमदग्निसुतो महान् । त्रिःसप्तकृत्वो भूपानां निहन्ता जग
अंशेन कपिलस्त्वञ्च सिद्धानाञ्च गुरोर्गुरुः । मातृज्ञानप्रदाता च योगशास्त्रवि
अंशेन ज्ञानिनां श्रेष्ठौ नरनारायणावृषी । त्वञ्च धर्मसुतो भूत्वा लोकविस्तार
अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम् । सर्वेषामवताराणां जीवरूपः स

यशोदाजीवनो नित्यो नन्दैकानन्दवर्धनः ।
प्राणाधिदेवो गोपिनां राधाप्राणाधिकः प्रियः ॥ ५० ॥

वसुदेवसुतः शान्तो देवकीदुःखभञ्जनः । अयोनिसम्भवः श्रीमान् पृथिवीभार
पूतनायै मातृगतिं प्रदाता च कृपानिधिः । बलकेशिप्रलम्बानां ममापि मोक्ष
स्वेच्छामय गुणातीत भक्तानां भयभञ्जन । प्रसीद राधिकानाथ प्रसीद कुरु
हे नाथ गार्दभीयोनेः समुद्धर भवार्णवात् । मूर्खस्त्वद्भक्तपुत्रोऽहं मामुद्धर्तुं

वेदा ब्रह्मादयो यञ्च मुनीन्द्रास्स्तोतुमक्षमाः ।
किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥ ५५ ॥

एवं कुरु कृपासिन्धो येन मे न भवेज्जनुः । दृष्ट्वा पादारविन्दं ते कः पुनर्भवं
ब्रह्मास्तोताखरःस्तोता नोपहासितुमर्हसि । सदीश्वरस्य विज्ञस्य योग्यायोग्ये
इत्येवमुक्त्वा दैत्येन्द्रस्तस्थौ च पुरतो हरेः । प्रसन्नवदनः श्रीमानतितुष्टो बभूव

इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।
सालोक्यसार्ष्टिसामीप्यं लीलया लभते हरेः ॥ ५९ ॥
इह लोके हरेर्भक्तिमन्ते दास्यं सुदुर्लभम् ।
विद्यां श्रियं सुकवितां पुत्रपौत्रान् यशो लभेत् ॥ ६० ॥

श्रीनारायण उवाच ।

श्रुत्वानुमेने दैत्येन्द्रस्तवनं करुणानिधिः । कथं करोमि संहारमीदृशं भक्त
अनुमन्य स्मृतिं तस्यसंजहारहरिः स्वयम् । नहि युक्तोवधस्तोतुर्दुर्वकुर्वि

नवो मायया विष्णोर्विसस्मार पुनः स्वकम् । दुरुक्तिं कण्ठदेशे तदधिष्ठानं चकार ह
वाच श्रीहरिंदैत्यः कोपात् प्रस्फुरिताधरः । मुनेसद्यो मर्त्तुकामो दैवग्रस्तो विचेतनः

दैत्य उवाच ।

वं त्वं मर्त्तुकामोऽसि दुर्बुद्धे मानवार्भक । अद्य प्रस्थापयिष्यामि त्वामहं यममन्दिरम्

आयासि जीवनाकाङ्क्षी मम तालवनं शिशो ।
न यास्यसि पुनर्गेहं बान्धवं न हि द्रक्ष्यसि ॥ ६६ ॥
न कंसो न जरासन्धो नरको न समो मम ।
देवाः कम्पन्ति मे नित्यं के चान्ये मत्समा भुवि ॥ ६७ ॥
न हि संहारकर्त्ता च मां संहर्त्तुं क्षमः शिवः ।
न च ब्रह्मा न विष्णुश्च न मृत्युः काल एव च ॥ ६८ ॥
मम तालतरून् भङ्क्त्वा पातयित्वा फलानि च ।
अहङ्कारोऽति सहसा किमहो कस्य तेजसा ॥ ६९ ॥

त्वं वद वटो सत्यं कमनीयोऽतिसुन्दरः । दुर्लभं जीवनं दातुं मह्यं कथमिहागतः ॥
ुक्त्वा मस्तके कृत्वा प्रेरयित्वा तु तं बली । दूरतः पातयामास श्रीकृष्णं मरणोन्मुखः
यित्वाच तं भूमौ विषाणाभ्यां जघानसः । कृष्णाङ्गस्पर्शमात्रेणतद्विषाणौ बभञ्जतुः
ो भग्नविषाणश्च तमीशं कोपतो मुने । जग्रास चर्वणं कर्त्तुं भग्नदन्तो बभूव ह ॥
सा दग्धवक्त्रश्च तमुज्जग्राह तत्क्षणे । जज्वाल व्यथितः कोपाद्ददार खुरतोमहीम्
यित्वातु लांगूलं शब्दं कृत्वा भयानकम् । स जगाम शिशुस्थानंदुद्रुवुर्बालकाभिया
श्च प्रेरयामास मस्तकेन महाबली । बलो मुष्टिं ददौ तस्मै मूर्च्छामाप ततोऽसुरः ॥
न चेतनां प्राप्य जगाम हरिसन्निधिम् । वज्रमुष्ट्याच व्यथितःपुनर्मूर्च्छामवापसः
श्च चेतनां प्राप्य समुत्तस्थौ व्यथाकुलः । उत्ससर्ज बृहल्लेडं(ण्ड) मूत्रञ्च भयमाप ह
ात् सन्धिक्षणंप्राप्य महाबलपराक्रमः । कृत्वा शिरसिगोविन्दं घूर्णयामासदानवः
यामास भूमौ तं घूर्णयित्वा पुनः पुनः । उत्पाट्य तालवृक्षंतं ताड़यामास माधवः॥
केशापहारेण मानवस्य भवेद् व्यथा । तथा बभूव दैत्यस्य तालवृक्षस्य ताड़नात्

गोवर्धनं समुत्पाट्य घातयामास तं विभुः। पपात वेगाच्छैलेन्द्रस्तस्योपरि
पर्वतस्य प्रहारेण मूर्च्छामाप महाबलः। बभूव पलिताङ्गश्च रुधिरञ्च समु
क्षणेन चेतनां प्राप्य समुत्तस्थौ रुषासुरः। गृहीत्वा पर्वतश्रेष्ठं प्रेरयामास
दृष्ट्वा शैलमुत्पतन्तं वेगेन मधुसूदनः। जग्राह दक्षिणकरे यथेक्षुदण्डवत्प्रभुः
पूर्वस्थाने पर्वतं तं स्थापयामास कौतुकात्। गृहीत्वा दैत्यकर्णाग्रं पातयामा
उत्पत्य च महावेगाच्चकार वेष्टनं हरेः। पृथिवीं घर्षयामास तीक्ष्णाग्रेण
प्रगृह्य श्रीहरिं वेगात्कृत्वा मूर्ध्नि महासुरः। उत्पपात मनोयायी लीलया
प्रहरञ्च तयोर्युद्धं निर्लक्षे च बभूव ह। ततो गृहीत्वा श्रीकृष्णं पपात धरणी
पुनर्मुहूर्त्तं युद्धञ्च बभूव भूतले तयोः। मुदा हरिः प्रशशंस प्रहस्य दानवेश्वर
मद्भक्तस्य बलेः पुत्र धन्यंत्वज्जीवनं परम्। स्वस्त्यस्तुते दानवेन्द्र वत्सनिर्वा
मद्दर्शनं स्वस्ति बीजं परं निर्वाणकारणम्। सर्वाधिकं सर्वपरं लभ स्थानं

इत्येवमुक्त्वा श्रीकृष्णः सस्मार चक्रमुत्तमम्।
सूर्य्यकोटिसमं दीप्त्या जग्राह तत् सुदर्शनम्॥ ६३॥
चिक्षेप भ्रामयित्वा च षोड़शारमनुत्तमम्।
चिच्छेद लीलया वध्यं ब्रह्मविष्णुमहेश्वरैः॥ ६४॥
पपात मस्तकं भूमौ दानवस्य महात्मनः।
तेजःसमूह उत्तस्थौ शतसूर्य्यसमप्रभः॥ ६५॥
विलोक्य हरिलोकं संश्लिष्टं कृष्णपदाम्बुजे।
सम्प्राप्य परमं मोक्षमहो दानवपुङ्गवः॥ ६६॥

गगनस्थाः सुराः सर्वे मुनयश्च भृशं मुदा। पारिजातप्रसूनानाञ्चक्रुस्ते पुष्प
नेदुर्दुन्दुभयः स्वर्गे ननृतुश्चाप्सरोगणाः। जगुर्गन्धर्वनिकरास्तुष्टुवुर्मुनयो
स्तुत्वा जग्मुः सुराः सर्वे मुनयो हर्षविह्वलाः। धेनुकस्य वधं दृष्ट्वा तत्राजग्मु
बलश्च बलिनां श्रेष्ठस्तुष्टाव पुरुषोत्तमम्। तुष्टुवुर्बालकाः सर्वे ननृतुश्च मु
दत्त्वा कृष्णबलाभ्याञ्च प्रपक्वानि फलानि च। सर्वाणिभक्षयामासुर्बालाः

त्वा पीत्वा हरिः शीघ्रं बलेन बालकैः सह। जगाम स्वालयं ब्रह्मन्निहत्य दानवेश्वरम्

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
धेनुकवधो नाम द्वाविंशोऽध्यायः।

---

# त्रयोविंशोऽध्यायः

## दुर्वाससःशापेन बलिनन्दनस्य गर्दभत्वम्।

नारद उवाच।

पापेन बलिजो गर्दभत्वमवाप ह। दुर्वासाः केन दोषेण शशाप दानवेश्वरम् ॥१॥
पुण्येन वा नाथ बलिनः श्रीहरेः पदम्। सहसैकत्वमुक्तिञ्च संप्राप दानवाधिपः ॥
सर्वं सुविस्तार्य्य वद सन्देहभञ्जन। अहो कविमुखे काव्यं नूतनं नूतनं पदे पदे ॥

श्रीनारायण उवाच।

ु वत्स प्रवक्ष्येऽहमितिहासं पुरातनम्। पुरा श्रुतं धर्मवक्त्रात् पर्वते गन्धमादने ॥
कल्पे च वृत्तान्तं विचित्रं सुमनोहरम्। नारायणकथोपेतं कर्णपीयूषमुत्तमम् ॥५॥
कल्पे कथा चेयं तत्र त्वमुपबर्हणः। आकल्पजीवी सश्रीकः सुन्दरः स्थिरयौवनः॥
शत्कामिनीनाञ्च पतिः शृङ्गारतत्परः। वरेण ब्रह्मणस्त्वञ्च सुकण्ठो गायनेश्वरः ॥
क्षणं पपुस्तास्ते सुन्दरं मुखपङ्कजम्। निमेषरहिताः सर्वाः कामबाणप्रपीड़िताः ॥

तासां प्राणैश्च घटितो विधिना त्वमिव श्रुतम्।
दिवानिशं सहचरा न जीवन्ति त्वया विना ॥ ६ ॥

द्याने च रहसि स्थाने स्थाने मनोरमे। गह्वरेषु च शैलानां कन्दरेषु नदीषु च ॥
नेषु च रम्येषु श्मशाने जन्तुवर्जिते। यथामनोरथं ताश्च क्रीडाञ्चक्रुस्त्वया सह ॥

तदा दैवाद्विधेः शापाद् भूत्वा दासीसुतो भवान्।
अधुना ब्रह्मणः पुत्रो वैष्णवोच्छिष्टभोजनात् ॥ १२ ॥

असंख्यकल्पजीवी च वैष्णवप्रवरो महान्। ज्ञानदृष्ट्या सर्वदर्शी प्रियशिष्य
तस्य कल्पस्य वृत्तान्तं मुने मत्तो निशामय। विस्तार्य्य दैत्यवृत्तान्तं कथयामि
एकदैव बलेः पुत्रो नाम्ना साहसिको बली।
स्वतेजसा सुरान् जित्वा प्रतस्थौ गन्धमादनम् ॥ १५ ॥
चन्दनोक्षितसर्वाङ्गो रत्नभूषणभूषितः। रत्नसिंहासनस्थश्च बहुसैन्यसमन्वित
एतस्मिन्नन्तरे तेन पथा याति तिलोत्तमा। रूपेणाप्सरसां श्रेष्ठा नानावेशवि
चारुचम्पकवर्णाभा रत्नाभरणभूषिता। नवयौवनसम्पन्ना कामबाणप्रपीडि
ईषद्धास्यप्रसन्नास्या दिव्यवस्त्रं सुविभ्रती। वक्रभ्रूभङ्गयुक्ता सा गजेन्द्रमन्द
स्तनमूरुं मुखेन्दुञ्च दृष्ट्वा साहसिको युवा। वायुना मुक्तवस्त्रायास्तस्यामू
सा ददर्श बलेः पुत्रमतीवसुमनोहरम्। प्रफुल्लमालतीमालां बिभ्रतं नवयौ
शरत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम्।
दृष्ट्वा तं विस्मिता कामात् कटाक्षञ्च चकार सा ॥२२॥
क्रीड़ायै चन्द्रलोकञ्च गच्छन्ती चन्द्रकामुकी। तस्थौ केन छलेनैव मत्ता
दर्शं दर्शञ्च तस्यास्यं प्रहस्य वक्रचक्षुषा। मुखस्याच्छादनं चक्रे वाससा सा
पुलकाङ्कितसर्वाङ्गं धर्मकर्मसमन्वितम्। बभूव काममत्ताया योनौ कण्डूयं
विसस्मार शशधरं बलिपुत्रमनोरथा। अहो को वेद भुवने दुर्ज्ञेयं पुंश्चली
पुंश्चल्यां यो हि विश्वस्तो विधिना स विडम्बितः।
वहिष्कृतश्च यशसा धर्मेण स्वकुलेन च ॥ २७ ॥
वाञ्छितं नूतनं प्राप्य विनश्यति पुरातनम्।
सदा स्वकर्मसाध्या सा को वा तस्याः प्रियोऽप्रियः ॥ २८ ॥
दैवे कर्मणि पैत्र्ये च पुत्रे बन्धौ न भर्त्तरि।
दारुणं पुंश्चलीचित्तं सदा श्रृङ्गारकर्मणि ॥ २९ ॥
प्राणाधिकं रतिज्ञं सामृतदृष्ट्या च पुंश्चली। रत्नप्रदं रत्नविज्ञं विषदृष्ट्या
सर्वेषां स्थलमस्त्येव पुंश्चलीनां न कुत्रचित्। दारुणा पुंश्चलीजातिर्नरया

निष्कृतिः सर्वभोगान्ते सर्वेषामस्ति निश्चितम् ।
न पुंश्चलीनां विप्रेन्द्र यावच्चन्द्रदिवाकरौ ॥ ३२ ॥
अन्यासां कामिनीनाञ्च कीटं हन्तुञ्च या दया ।
सा नास्ति पुंश्चलीनान्तु कान्तं हन्ति पुरातनम् ॥ ३३ ॥
न्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया। रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनम् ३४
थिव्यां यानि पापानि पुंश्चलीष्वेवभारते । तिष्ठन्ति ताभ्यो नपरः पापिष्ठाःसन्तियेचन
श्चलीपरिपक्वान्नं सर्वपातकनिश्चितम् । दैवे कर्मणि पैत्र्ये च न देयञ्च तथा जलम्॥
अन्नं विष्ठा जलं मूत्रं पुंश्चलीनाञ्च निश्चितम् ।
दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत् ॥ ३७ ॥
वर्षं कालसूत्रे पचत्येव सुदारुणे। घोरान्धकारे कृमयस्तं दशन्ति दिवानिशम् ॥३८
श्चल्यन्नञ्च यो भुङ्क्ते दैवाद्यदि नराधमः । सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम्
युः श्री यशसां हानिरिह लोके परत्र च। तस्माद्यत्नाद्रक्षणीयं पाकपात्रं कलत्रकम्॥
पुंश्चलीदर्शने पुण्यं यात्रासिद्धिर्भवेद् ध्रुवम् ।
स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति ॥ ४१ ॥
नं दानं व्रतञ्चैव जपश्च देवपूजनम् । निष्फलं पुंश्चलीनाञ्च भारते जीवनं वृथा ॥४२
थितं कुलटाख्यानं दुर्ज्ञेयञ्च यथागमम् । संवादञ्च तयोस्तत्र प्रकृतं शृणु नारद ॥४३॥
पुनश्चेतनां प्राप्य तां दृष्ट्वैव बले सुतः । कामातुरः प्रमत्तश्च जगाम कुलटान्तिकम्
ाच कुटिलापाङ्गीं पीनश्रोणिपयोधराम् । व्रीडया वाससावक्त्रमाच्छन्नंकुर्वतींमुदा

साहसिक उवाच ।

कासि त्वं कस्य कन्यासि कस्य कान्तासि कामिनि ।
स्वयं क्व यासि कं सुभ्रू पुण्यवन्तं मनोहरम् ॥ ४६ ॥
पान्ते तपसा पूतं भोक्तुं त्वामेवसुन्दरि । यंतं यासि याहिसात्वं भृत्यंमांकर्तुमर्हसि
णीहि रतिपुण्येन मां भृत्यं रतिलोलुपम् । शृङ्गारलोलुपा त्वञ्च शृङ्गारंदेहि कामुकि
त्वया सह ममाश्लेषो विधिना च विनिर्मितः ।

निरूपितं यत्तेनैव वार्यते केन तत् प्रिये ॥ ४९ ॥
वाक्यं पीयूषसदृशं सस्मितं वद सुन्दरि। शीघ्रं भुजलतापाशैर्बन्धनं कुरु नि
आसनं देहि कल्याणि स्वोरुं कनकसन्निभम्।
स्तनमण्डलकुम्भञ्च यात्रायोग्यं प्रदर्शय ॥ ५१ ॥
तीक्ष्णास्त्रेण कटाक्षेण जर्जरं कुरु भामिनि। कामसर्पक्षतं पादस्पर्शेन नीरुजं
अधरौष्ठामृतं स्वादु देहि मे क्षुधिताय च। पक्वदाडिमबीजाभं दन्तं दर्शय
गम्भीरनाभिं त्रिवलीं द्रष्टुमिच्छामि सुन्दरि।
नीवीप्रमोक्षणं कर्त्तुमिच्छा मे वर्त्तते सदा ॥ ५४ ॥
श्रोणिं पश्यामि ललितां मुनिमानसमोहिनीम्।
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनाम् ॥ ५५ ॥
शरत्पार्वणचन्द्रास्यं प्रसन्नञ्च प्रदर्शय। सा च तद्वचनं श्रुत्वा तमुवाच
दृष्ट्वार्तं कामबाणेन मानसं यक्षकामिनी ॥ ५६ ॥

तिलोत्तमोवाच।

पतिस्त्वत्सदृशो नाथ कामिनीनां मनीषितः।
बलिपुत्रोऽसि धर्मिष्ठो रूपवान् गुणवान् युवा ॥ ५७ ॥
शृङ्गारनिपुणः कान्तः कामशास्त्रविशारदः। सदा मनोज्ञः स्त्रीणां त्वं सुवेश
सुवेशं सुन्दरं शान्तं कान्तं दान्तमरोगिणम्। शृङ्गारज्ञं गुणज्ञं त्वां युवानं
स्त्रीमनोज्ञं दयालुञ्च बलिष्ठं सन्तमीश्वरम्। दातारमनुरक्तञ्च कान्तमिच्छ
एते सर्वे गुणाः कान्त सन्ति कान्ते त्वयि ध्रुवम्।
त्वां न वाञ्छन्ति याः कान्तास्ता अविज्ञाश्च वञ्चिताः ॥ ६१ ॥
सन्तोषं ते करिष्यामि समागम्य विधेर्गृहात्।
वेशं कृत्वा तु चन्द्रार्थं यात्राद्य तस्य कामिनी ॥ ६२ ॥
अन्याश्लेषणमात्रेण भविता धर्मलङ्घना। याश्च धर्मान्न रक्षन्ति तासाञ्च
चन्द्राश्लेषं न जानन्ति यास्ता मूढाः प्रकीर्त्तिताः।

ता एव मातृगर्भस्था न प्राज्ञाः पौरुषैरसैः ॥ ६४ ॥

वह्नौ मदनश्चन्द्रो मरुत्वान्नलकूवरः । एभिर्नालिङ्गिता यास्ता वञ्चिता रतिकर्मभिः

ानिशं मानसं मे तेषां क्रीड़ाश्च चिन्तयेत् । विशेषतः कामदेवो निपुणो रतिकर्मणि

शृङ्गारमाश्लेषमालापममृताधिकम् । अद्य तस्य रतिदिनं तेन तं चिन्तयेन्मनः ॥६७

तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः ।

सकामश्च सपुलकस्तामुवाच रहःस्थले ॥ ६८ ॥

साहसिक उवाच ।

ब्रह्मणा निर्मिता त्वञ्च कौतुकेन तिलोत्तमे ।

अतो वरा चाप्सरसां विदग्धरसिकेश्वरी ॥ ६९ ॥

ोपसुन्दयोर्नाशनिमित्तेन प्रयत्नतः । सर्वरूपगुणाधारा विधिना च कृता पुरा ॥७०

जानासि सर्वज्ञे विज्ञे सुरतकर्मणि । हर्षेण श्रोतुमिच्छामि वद वो मानसं वचः ॥

प्रियश्च को वा च कःस्वभावोवरानने । अवश्यंगोपनीयञ्च श्रोतुमिच्छामि सुन्दरि

र्वाणां सुराणाञ्च राज्ञां पुण्यवतामपि । सर्वेषां प्राणतुल्या त्वमेषु ते कः परःप्रियः

असुरस्य वचः श्रुत्वा प्रहस्य सा तिलोत्तमा ।

मुखमाच्छादयामास विलोक्य वक्रचक्षुषा ॥ ७४ ॥

सारमन्तरस्थमव्यक्तमतिगोपनम् । उवाच मानसं वाक्यमज्ञातं विदुषामपि ॥७५

तिलोत्तमोवाच ।

नीयं साहसिक पुंश्चलीनां मनोवचः । स्त्रीजातीनाञ्च सर्वासामुपहासकरं परम् ॥

ामपि दुर्ज्ञेयं चरितं योषितामपि । विशेषतोऽपि दुर्ज्ञेयं पुंश्चलीनां मनोवचः ॥७७

वेदवेदाङ्गशास्त्रान्तं सर्वं जानाति पण्डितः ।

कान्त नान्तं विजानाति दिशामाकाशयोषिताम् ॥ ७८ ॥

विषादप्यप्रियो वृद्धो रत्नादपि च योषिताम् ।

युवा सर्वस्वहर्त्ता चेत्प्राणेभ्योऽपि परः प्रियः ॥ ७९ ॥

तं सुन्दरं दृष्ट्वा ह्यार्त्ता भवति पुंश्चली । विशेषतः सुवेशश्च दृष्ट्वैव हतचेतना ।

निमेषरहिता तस्य लोचनाभ्यां पपौ मुखम् ॥ ८० ॥
योनौ जलं क्षरेत्तस्याः सद्यः कण्डूयनं भवेत् ।
मनोऽतिलोलमस्थैर्य्यं सर्वाङ्गानि चकम्पिरे ।
जड़ीभूतं शरीरञ्च प्रदग्धं मदनानलात् ॥ ८१ ॥

संप्राप्य तं चेद्रहसि सालापं कुरुते स्फुटम् । सकटाक्षं स्मेरवक्त्रं दर्शयित्वा पु
तथा यदि वशं कर्त्तुं न शशाक जितेन्द्रियम् । स्वमङ्गं दर्शयित्वातमन्तर्वाक्यंस्
दुःसाध्ये नायके दुःखं भवेदाजन्म जन्मनि । तत्तुल्यं तत्परं प्राप्य तं विस्मरति

पुंश्चलीनामप्रियः कः कः प्रियो वा महीतले ।
योऽतिशृङ्गारनिपुणः स च प्राणाधिकः प्रियः ॥ ८५ ॥

पूर्वजारं पतिं पुत्रं भ्रातरं पितरं प्रसूम् । विशिष्टं नूतनं प्राप्य सर्वं त्यजति लील
न दानेन न मानेन सत्येन स्तवनेन वा । नोपकारेण प्रीत्या वा सा साध्या सुर
शयने भोजने चापिस्वप्नेज्ञानेदिवानिशम् । नित्यं सत्पुरुषाश्लेषंस्मरन्तिकुलटाः
शृङ्गारनिपुणानाञ्च ध्यानसाध्या चिरं परम् । दारुणापुंश्चली जातिः प्रार्थयन्ती त
सर्वासां कुलटानाञ्च चरित्रं कथितं मया । अकथ्यं गोपनीयञ्च मम हृद्वचनं शृ
मम सन्ति प्रियतरा गन्धर्वेषूरगेषु च । युवानो रतिशूराश्च कामशास्त्रविशार
विशेषतः शशधरे स्नेहो मे विद्यते परः । ततोऽतिरिक्तः सर्वस्मादपि कामः प्रि

प्रियो मे कामसदृशो न भूतो न भविष्यति ।
स्मरस्य स्मरणात् तूर्णं सुस्निग्धं मानसं मम ॥ ९३ ॥

इत्येवं कथितं सर्वमात्मनो योषितामपि । आज्ञां कुरुमहाराज यास्यामिचन्द्रस
चन्द्रस्थानात्तव स्थानं समागत्य सुनिश्चितम् । सन्तोषं तव दैत्येन्द्रकरिष्यामि
श्रुत्वैवं बलिपुत्रश्च जहासोच्चैः पुनः पुनः । सा वक्रचक्षुषालोक्य तं जहास स
छलेन दर्शयामास कठिनं स्तनयोर्युगम् । चारुचम्पकवर्णाभं वर्त्तुलं पीनमु

श्रोणीं सुकठिनां रम्यां रम्भास्तम्भविनिन्दिताम् ।
सकटाक्षं स्मेरमुखं कपोलं पुलकाञ्चितम् ॥ ९८ ॥

रहःस्थानं समासाद्य कामेन हतचेतसा ।
पुलकाञ्चितसर्वाङ्गी लोचनाभ्यां पपौ मुखम् ॥ ९९ ॥

...स्य रूपञ्च वेशञ्च दर्शं दर्शं पुनः पुनः । मुखस्याच्छादनं भावात् कुर्वन्तीसूक्ष्मवाससा
...तिकामातुरां दृष्ट्वा सुप्राज्ञो बलिनन्दनः । पप्रच्छकामिनीं कामी भावं विज्ञातुमुत्सुकः

साहसिक उवाच ।

...करिष्यति मां सत्यं वद पङ्कजलोचने । कार्य्यान्तरं करिष्यामि सुचिरंस्थातुमक्षमः

कामिनीषु बलात्कारो न धर्मो धर्मिणां प्रिये ।
विशेषतोऽतिविदुषां नास्माकं स्वकुलोचितः ॥ १०३ ॥

...ङ्गारं देहि वागच्छ रतिं कर्त्तुं सुरान्तिके । कःक्षमोवा वशीकर्तुं पुंश्चलींबहुगामिनीम्
...नवस्य वचः श्रुत्वा शुष्ककण्ठौष्ठतालुका । आत्मानमधमंमन्या भिद्यमानास्मराम्रतः

तिलोत्तमोवाच ।

कथमेवं ब्रूहि त्वं मे कान्त प्राणाधिकः प्रियः ।
कथं वा कोपयुक्तोऽसि कुरु कार्य्यं मनीषितम् ॥ १०६ ॥
त्वामेवं विमुखं कृत्वा यामि चन्द्रान्तिकं यदि ।
तवाभिशापात्तत्रैव सद्यो विघ्नो भविष्यति ॥ १०७ ॥

...विहारं कुरु भद्रं ते करिष्यति हरिः स्वयम् । पदे पदे शुभं तस्य यः स्त्रीमानञ्च रक्षति
...वमत्य स्त्रियं मूढो यो याति पुरुषाधमः । पदे पदे तदशुभं करोति पार्वती सती ॥
...तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः । कामशास्त्रेषु निष्णातस्तद्भावंबुबुधे सुधीः
...भावं विहाय भावज्ञः कामशास्त्रविशारदः । करे धृत्वा समाश्लिष्य चुचुम्बमुखपङ्कजम्
...जगाम च तया सार्द्धं गन्धमादनगह्वरम् । ददर्श तत्र गत्वा च स्थानं जन्तुविवर्जितम् ॥
...संस्थाप्य रत्नदीपांश्च धूपञ्च सुमनोहरम् । शय्यां रतिकरीं कृत्वा सुष्वाप च तया सह
...नानाप्रकारशृङ्गारञ्चकार काममोहितः । तिलोत्तमा तं बुबुधे सुरादपि विचक्षणम् ॥
...विपरीतरतौ तुष्टा बभूव रसिकेश्वरी । दिवानिशं न बुबुधे नवसङ्गमर्मूच्छिता ॥११५॥
...तिलोत्तमा कामभावाद् बलिपुत्रमुवाच ह । कृत्वा वक्षसि प्राणेशं स्तनयोरन्तरे मुदा

तिलोत्तमोवाच ।

कदा द्रक्ष्याम्यहं कान्त मुखचन्द्रं मनोहरम् । एवंभूतं शुभदिनं कदा मे भविता पु
अयि किं रूपमाश्चर्य्यं गुणो वा तव दानव । भ्रूवंश्शृङ्गारनिपुणस्त्वत्परो नास्ति
मां विस्मरसि कालेन पुरुषः षट्पदो यथा ।
स्त्रीणां सत्पुरुषाश्लेष आजीवं मनसि स्थितः ॥ ११६ ॥
सत्सङ्गमः शुभदिने पुण्यात् पुण्यवतां भवेत् । सद्विच्छेदो दुःखहेतुर्मरणादतिरि
पीयूषभोजनात्स्वर्गवासादपिचदुर्लभः । सत्सङ्गमः सुखमयोऽप्यसत्सङ्गोविपा
क्षणं तिष्ठ महाराज पुनरालिङ्गनं कुरु । त्वया सार्धं मम प्राणा यास्यन्ति चेतसा
इत्येवमुक्त्वा कुलटा कृत्वा वक्षसि सादरम् । पुमङ्गसङ्गोत्पुलका मूर्च्छामाप सुखे
कुलटालिङ्गनालापात् सोऽतिकामी बभूव ह ।
यथा दीप्तः कृष्णवर्त्मा वर्धते हविषाधिकम् ॥ १२४ ॥
पुनश्चकार शृङ्गारमसुरोऽष्टविधं मुने । चुम्बनञ्च नवविधं यथास्थाने यथोचि
नखदन्तकरैः क्रीड़ां चकार विविधां पुनः । किङ्किणीनां कङ्कणानां बभूव शब्द
मुनेर्दुर्वाससस्तेन ध्यानभङ्गो बभूव ह । अदृष्टस्य तयोस्तत्र वल्मीकाच्छादितस्य
योगासनं कुर्वतश्च गन्धमादनगह्वरे । ध्यायतश्चरणाम्भोजं कृष्णस्य परमात्म
न पपात तयोर्दृष्टिः समीपस्थे महामुनौ ।
कामात्मनोर्न हि ज्ञानं कामेन हतचेतसोः ॥ १२६ ॥
सहसा चेतनां प्राप्य प्रज्वलन् ब्रह्मतेजसा । ददर्श पुरतस्तौ तु मुनिरुन्मील्य लोच
दिवानिशं न जानन्तौ संयुक्तौ काममोहितौ ॥ १३० ॥
दृष्ट्वा चुकोप तेजस्वी रुद्रांशो भगवान् विभुः । उवाचतौ विहारान्ते रक्तपङ्कजलो
ध्यानप्राप्तपदाम्भोजविच्छेदोद्विग्नमानसः ॥ १३१ ॥

दुर्वासा उवाच ।

उत्तिष्ठ गर्दभाकार निर्लज्ज पुरुषाधम । भक्तप्रधानस्य बलेः पुत्रः पशुसमप्रभः ॥
देवो वा मानवो वापि दैत्यगन्धर्वराक्षसाः ।

लज्जां कुर्वन्ति सततं स्वजातौ च पशून् विना ॥ १३३ ॥
...नलज्जाविहीना च खरजातिर्विशेषतः । तस्मात्वं दानवश्रेष्ठ खरयोनिं व्रजाधुना ॥
...लोत्तमे त्वमुत्तिष्ठ लज्जाहीनाच पुंश्चली । एतादृशीस्पृहा दैत्ये व्रज योनिश्च दानवीम्
...येवमुक्त्वा स मुनिस्तस्थौ तत्ररुषा ज्वलन् । तौच तुष्टुवतुर्भीतावुत्थाय व्रीड़ितौ मुनिम्

साहसिक उवाच ।

...ब्रह्मात्वञ्च विष्णुश्चत्वञ्चसाक्षान्महेश्वरः । हुताशनस्त्वंसूर्य्यश्चसृष्टिस्थित्यन्तकारकः
...मापराधं भगवन् कृपां कुरु कृपानिधे । मूढ़ापराधं सततं यः क्षमेत् स सदीश्वरः ॥
...येवमुक्त्वा दैत्येन्द्रो रुरोदोच्चैः पुरो मुनेः । कृत्वा तृणानि दशने पपात चरणाम्बुजे ॥

तिलोत्तमोवाच ।

...नाथ करुणासिन्धो दीनबन्धो कृपांकुरु । विधिसृष्टौच सर्वेषां मूढ़ा स्त्रीजातिरेवच
ततोऽतिमत्ता कुलटा सदा कामातुरा परा ।
लज्जाभीतिचेतनाश्च न सन्ति कामुके विभो ॥ १४१ ॥
...युक्त्वा रोदनं कृत्वा जगाम शरणं मुने । विना विपत्तौ केषाञ्चिज्ज्ञानं भवति भूतले
...र्दृष्ट्वा च वैकल्यं बभूव करुणा मुनेः । उवाच ताभ्यामभयं दत्त्वा मुनिवरो मुने ॥

दुर्वासा उवाच ।

...शापः प्रसादो वा भवेद्दैवेन दानव । सत्कीर्त्तिरपकीर्त्तिर्वा प्राक्तनप्रभवा ध्रुवम् ॥
विष्णुभक्तबलेः पुत्रः सद्वंशप्रभवो जनः ।
जनकाद्विष्णुभक्तोऽसि जानामि त्वां सुनिश्चितम् ॥ १४५ ॥
...कस्य स्वभावो हि जन्ये तिष्ठतिनिश्चितम् । यथाश्रीकृष्णपादाङ्कः कालीयवंशमस्तके
...प्राप्य गार्दभीं योनिं वत्स निर्वाणतांव्रज । पूर्वकृष्णार्चनफलंन हि लुप्तंसतां चिरात्
वृन्दारण्यं तालवनं व्रज शीघ्रं व्रजान्तिकम् ।
प्राणांस्त्यक्त्वा हरेश्चक्रान्मुक्तिं प्राप्स्यसि निश्चितम् ॥ १४८ ॥
...लोत्तमे भारते त्वं बाणपुत्री भविष्यसि । श्रीकृष्णपौत्राश्लेषेण पुनः पूताभविष्यसि
...येवमुक्त्वा स मुनिर्विरराम महामुने । तौ जग्मतुर्यथास्थानं प्रणम्य मुनिपुङ्गवम् ॥

इत्युक्तं सर्वंवृत्तान्तं दैत्यस्य खरजन्मनः । तिलोत्तमा बाणपुत्री ह्युषानिरुद्धकामि
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे तिलोत्तमा
पुत्रयोर्ब्रह्मशापप्रस्तावो नाम त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः

### कन्दलीदुर्वाससोः परिणयः ।

श्रीनारायण उवाच ।

निगूढं श्रृणु वृत्तान्तं मुनेर्दुर्वाससो मुने । अहोऽस्य दारसंयोगः कथं तदूर्ध्वरेतस
दृष्ट्वातयोश्च शृङ्गारंमुनिः कामीवभूवह । जितेन्द्रियोऽसत्संसर्गाद्दोषः सांसर्गिको
सहसा तस्य हृदये बभूव सुरते स्पृहा । तपस्तप्त्वा तत्र दध्यौ कामिनीं मदना
एतस्मिन्नन्तरे तेन पथा याति मुनीश्वरः । प्रार्थयन्त्या पतिं सन्तमौर्वश्च सुतया
ऊरूद्भवो ब्रह्मणश्च पुराकल्पे तपस्यतः । ऊर्ध्वरेताश्च योगीन्द्र औौर्वस्तेन इति स्मृ

तस्य जानूद्भवा कन्या कन्दली नाम विश्रुता ।
दुर्वाससं प्रार्थयन्ती नान्यं मनसि रोचते ॥ ६ ॥

सस्रुतो हि मुनिश्रेष्ठो मुनेर्दुर्वाससः पुरः । तस्थौ महाप्रसन्नश्च ज्वलदग्निशिखो
मुनीन्द्रोऽपि मुनीन्द्रं तं पुरो दृष्ट्वा ससम्भ्रमः । प्रजवेन समुत्तस्थौ ननाम च मुदा
औौर्वो दुर्वाससं तत्र समाश्लिष्य मुदान्वितः । उवाच मुनये सर्वं कन्यकाया मनो

औौर्व उवाच ।

विख्याताकन्दलीनाम मम कन्यामनोहरा । प्रौढ़ात्वामेवध्यायन्तीश्रुत्वावाविक्र
अयोनिसम्भवा कन्या त्रैलोक्यं मोहितुं क्षमा । सर्वरूपगुणाधारा दोषेणैकेन
अतीवकलहाविष्टा कोपेन कटुभाषिणी । नानागुणयुतं द्रव्यं न त्यजेदेकदोषतः
और्वस्य वचनं श्रुत्वा हर्षशोकान्वितो मुनिः । ददर्श कन्यां पुरतो गुणरूपसम

शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् । ईषद्धास्यप्रसन्नास्यां पीनश्रोणिपयोधराम्
नवयौवनसंयुक्तां पश्यन्तीं वक्रचक्षुषा । रत्नालङ्कारशोभाढ्यां वह्निशुद्धांशुकान्विताम् ॥
मुनिर्मुमोह तां दृष्ट्वा कामबाणप्रपीड़ितः । उवाच तं मुनिश्रेष्ठं हृदयेन विदूयता ॥ १६ ॥

दुर्वासा उवाच ।

नारीरूपं त्रिभुवने मुक्तिमार्गनिरोधनम् । व्यवधानं तपस्यायाः सततं मोहकारणम् ॥
कारागारे च संसारे दुर्वहं निगड़ं परम् । अच्छेद्यं ज्ञानखड्गैश्च महद्भिः शङ्करादिभिः ॥
सङ्गिच्छायातिरिक्तश्च कर्मभोगात् परात्परम् ।
इन्द्रियादिन्द्रियाधाराद्विद्यायाश्च मतेरपि ॥ १६ ॥
आदेहंसङ्गिनी छाया भोगान्तंभोग एवच । देहेन्द्रियाणि जीवान्तं विद्याचैवाघशीलनम्
प्रतिश्चैवावशीलान्तासुस्त्रीजन्मनिजन्मनि । यावज्जीवीचसुस्त्रीकोन तावज्जन्मखण्डनम्
यावच्च जीविनो जन्म तावद्भोगः सुखावहः । परं मुनीन्द्र सर्वस्माद्धरिपादाब्जसेवनम्
ध्यायतः कृष्णपादाब्जं मम विघ्नो बभूव ह । न जाने कर्मदोषेण केन वा पूर्वजन्मनः ॥
रम्भया सह श्रृङ्गारं दृष्ट्वा दैत्यस्य मन्मनः । बभूव कामसंयुक्तंदत्तं धात्रा च तत्फलम्
किन्त्वहं तव कन्यायाः कटूक्तिशतकं मुने ।
ध्रुवं क्षमां करिष्यामि दास्यामि च ततः फलम् ॥ २५ ॥
सर्वतोऽपिपरा निन्दा स्त्रीकटूक्तिसहिष्णुता । अतीवनिन्दितः सत्सु स्त्रीजितोभुवनत्रये
तवाज्ञां मस्तके कृत्वा ग्रहीष्यामि सुतांतव । उपेतां कामिनीं त्यक्त्वा कालसूत्रंव्रजेन्नरः
रहस्युपस्थितां कामात् पुंश्चलीं चेज्जितेन्द्रियः ।
परित्यजेद्धर्मभयादधर्मान्नरकं व्रजेत् ॥ २८ ॥
इत्येवमुक्त्वा दुर्वासा विरराम हरेः पुरः । मुनिर्वेदोक्तविधिना ददौ तस्मै सुतां मुने ॥
स्वस्तीत्युवाच दुर्वासा मुनिश्च कौतुकं ददौ । कन्यासमर्पणं कृत्वा मोहाच्चैव रुरोद ह
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः । अपत्यभेदशोकौघःस्वात्मारामं न मुञ्चति
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम् ।
मूर्च्छितां तातविच्छेदाद्रुदन्तीं शोकसंयुताम् ॥ ३२ ॥

और्व उवाच ।

श्रृणु वत्से प्रवक्ष्यामि नीतिसारं सुदुर्लभम् । हितं सत्यञ्च वेदोक्तं परिणामसुखावहम्

स्वकान्तश्च परो वन्धुरिह लोके परत्र च ।

न हि कान्तात् परः प्रेयान् कुलस्त्रीणां परो गुरुः ॥ ३४ ॥

देवपूजाव्रतं दानं तपश्चानशनं जपः । स्नानञ्च सर्वतीर्थेषु दीक्षा सर्वमखेषु च ॥

प्रादक्षिण्यं पृथिव्याश्च ब्राह्मणातिथिसेवनम् ।

सर्वाणि पतिसेवायाः कलां नार्हन्ति षोड़शीम् ॥ ३६ ॥

किमेतैः पतिभक्ताया अभक्तायाश्चभारते । यदादुःखी सुखारम्भे साकाङ्क्षःप्रथमो

पतिसेवा परो धर्मः सर्वशास्त्रेषु पठ्यते । स्वप्रज्ञानेन सततं कान्तं नारायणाधि

दृष्ट्वा तच्चरणाम्भोजं सेवां नित्यं करिष्यति ॥ ३८ ॥

परिहासेन कोपेन भ्रमेणावज्ञयामुने । कटूक्तिं स्वामिनः साक्षात् परोक्षान्न करि

स्त्रियो वाग्योनिदुष्टायाःकामतोभारतेभुवि । प्रायश्चित्तंश्रुतौनास्तिनरकं ब्रह्मणः

सर्वधर्मपरीता या कटूक्तिं कुरुते पतिम् । शतजन्मकृतं पुण्यं तस्या नश्यति नि

दत्त्वाकन्यांबोधयित्वाजगाममुनिपुङ्गवः । स्वात्मारामंस्वाश्रमेच तस्थौस्त्रीसहितो

सम्भोगेच्छावृते चित्ते कामी संप्राप कामिनीम् ।

अहो सुकृतिनां कामो वाञ्छामात्रेण सिध्यति ॥ ४३ ॥

शय्यां रतिकरीं कृत्वा मुनिश्रेष्ठोमहामुने । शुभे क्षणेतां गृहीत्वा सुष्वाप निर्जने

नारीरसानभिज्ञः स्यादाजन्म मुनिपुङ्गवः । तथापि सुरतो विज्ञः कामशास्त्रवि

नानाप्रकारश्रृङ्गारञ्चकार विधिपूर्वकम् । नवसङ्गममात्रेण मूर्च्छां संप्राप कन्दली

मूर्च्छां प्राप मुनिश्रेष्ठो बुबुधे न दिवानिशम् । एवं प्रतिदिनं तत्र चकार सुरतिं

विदग्धाया विदग्धेन बभूव सङ्गमः समः । संबभूव गृहासक्तस्तपस्त्यक्त्वा मुनी

करोति कलहं नित्यं कन्दली स्वामिना सह ।

मुनीन्द्रो बोधयामास नीतिवाक्येन कामिनीम् ॥ ४६

सा तन्न बुबुधे किञ्चित् करोति कलहे स्पृहाम् ।

तातप्रदत्तज्ञानेन सा न शान्ता बभूव ह ॥ ५० ॥
जहाति प्रबोधेन स्वभावो दुरतिक्रमः । नित्यं कटूक्तिं कान्तं सा करोति हेतुना विना
जगत् प्रकम्पितं येनतया कोपात् स कम्पितः । तयाकृतां कटूक्तिश्च क्षमसंस्थाचकारह
बोधयामास तां नित्यं सद्यो मोहाद्दयानिधिः । कटूक्तिशतकं पूर्णं तत्कालेन बभूव ह
क्षमां चकार कृपया कटूक्तिश्च शताधिकाम् । पत्नीकटूक्त्या नियतं प्रदग्धं मानसं मुनेः
तस्याः कटूक्तिकारिण्याः कर्म पूर्णं बभूव ह ।
स्वात्मारामो दयालुश्च कोपं त्यक्तुं न सक्षमः ॥ ५५ ॥
शाप कामिनीं मोहाद्भस्मराशिर्भवेति च । मुनेरिङ्गितमात्रेण भस्मसात् सा बभूव ह
वमत्युक्तिताना॑श्च न कल्याणं जगत्त्रये । शरीरेभस्मसाद्भूते प्रतिविम्बः स चात्मनः
जीवस्तत्रान्तरिक्षस्थो ह्युवाच विनयात् प्रभुम् ॥ ५८ ॥

जीव उवाच ।

नाथ सर्वदर्शी त्वं सततं ज्ञानचक्षुषा । सर्वं जानासि सर्वज्ञ किमहं बोधयामि ते ॥
सदुक्तिर्वा कटूक्तिर्वा कोपः सन्ताप एव च ।
लोभो मोहश्च कामश्च क्षुत्पिपासादिकश्च यत् ॥ ६० ॥
थौल्यंकार्श्यञ्च नाशश्च दृश्यादृश्यं समुद्भवम् । सर्वंशरीरधर्मञ्च न जीवस्य न चात्मनः
सत्वं रजस्तम इति शरीरं त्रिगुणात्मकम् । तच्च नानाप्रकारञ्च निबोध कथयामि ते
किञ्चित्सत्वातिरिक्तश्चकिञ्चिद्देवरजोधिकम् । तमोऽतिरिक्तंकिञ्चिच्चनसमंकुत्रचिन्मुने
सत्वोदयाच्च मुक्तीच्छाकर्मेच्छाचरजोगुणात् । तमोगुणाज्जीवहिंसाकोपोऽहङ्कारएवच
कोपात्कटूक्तिर्नियतं कटूक्त्यां शत्रुताभवेत् । तयाचाप्रियता सद्यः शत्रुः कः कस्यभूतले
को वा प्रियोऽप्रियः कः किं मित्रं को रिपुर्भवेत् ।
इन्द्रियाणि च बीजानि सर्वत्र शत्रु मित्रयोः ॥ ६६ ॥
प्राणाधिकः प्रियः स्त्रीणां भर्त्तुः प्राणाधिका प्रिया ।
बभूव शत्रुता सद्यो दुरुक्त्या च क्षणाद् द्वयोः ॥ ६७ ॥
कृतं तत्कृतं सर्वं कामदोषेण वै प्रभो । क्षमापराधं निखिलं किं कर्तव्यं वदाधुना॥६८॥

किं करोमि क्व यामीतिभविता कुत्र जन्म मे। तवनान्यस्य जायाहंभविष्यामि
इत्येवमुक्त्वा जीवश्च मौनीभूतो बभूव ह। मूर्च्छामवाप स मुनिः शोकेन हतचे
स्वात्मारामो महाज्ञानीजहारचेतनामहो। स्त्रीविच्छेदो विदग्धानांसर्वशोकात्
क्षणेन चेतनां प्राप्य प्राणांस्त्यक्तुं समुद्यतः। तत्र योगासनं कृत्वा चकार वायु

एतस्मिन्नन्तरे तत्र जगाम ब्राह्मणोऽर्भकः।
दण्डी चक्री रक्तवासा बिभ्रत्तिलकमुत्तमम् ॥७३॥

सस्मितः श्यामवर्णश्च प्रज्वलन् ब्रह्मतेजसा। वयसातिशिशुः शान्तोज्ञानी वेदवि
दृष्ट्वा तं सम्भ्रमेणैव दुर्वासाः प्रणनाम ह। वासयामास तत्रैव पूजयामास भक्ति
उवाच ब्राह्मणवटुर्दत्त्वा तस्मै सदाशिषम्। तद्दर्शनादाशिषा च सर्वं दुःखं गतं
शिशुरूपं क्षणं स्थित्वा तमुवाचविचक्षणः। पीयूषतुल्यं नित्योऽयं नीतिशास्त्रवि

शिशुरुवाच।

सर्वं जानासिसर्वज्ञ गुरोर्मन्त्रप्रसादतः। किं तत्त्वं त्वामहं विप्र पृच्छामिशोक

ब्राह्मणानां तपो धर्मस्तपः साध्यं जगत्त्रयम्।
स्वधर्मं वै परित्यज्य किमिदानीं करोषि भो ॥ ७९ ॥
का कस्य पत्नी कः कान्तः कस्या वा भुवनत्रये।
मूर्खाणां वञ्चनां कर्त्तुं करोति मायया हरिः ॥ ८० ॥

मिथ्यापत्नी तवेयञ्च क्षणात्तेनगताधुना। न हि सत्यमदृश्यञ्च मिथ्या यत्राविर्भ
एकानंशा च भगिनी वसुदेवसुता हरेः। पार्वत्यंशसमुद्भूता सुशीला चिरजी
कल्पे कल्पे सुन्दरी सा तव पत्नी भविष्यति। मनोदेहि तपस्यायां मुदा कतिप
कन्दली कन्दलीजातिर्भविष्यति महीतले। शुभदा फलदा कान्ता सकृत्सूता

कल्पान्तरे शान्तरूपा तव पत्नी भविष्यति।
अत्युच्छ्रितस्य दमनमुचितञ्च श्रुतौ श्रुतम् ॥ ८५ ॥

इत्येवमुक्त्वा शीघ्रञ्च विप्ररूपी जनार्दनः। दत्त्वा ज्ञानञ्च विप्राय सोऽन्तर्धान
मुनिः सर्वं भ्रमं त्यक्त्वा तपस्यायां मनो दधे। कन्दली कन्दलीजातिर्बभूव

...त्यस्तालवनं गत्वा बभूव गर्दभाकृतिः । तिलोत्तमा बाणपुत्री बभूव समये मुने ॥८८॥
दैत्येन्द्रो विष्णुचक्रेण प्राणांस्त्यक्त्वा सुवाञ्छितम् ।
संप्राप चरणाम्भोजं मुनेरपि सुदुर्लभम् ॥ ८९ ॥
...ले तिलोत्तमा भूत्वा जगाम स्वालयं पुनः । कृष्णपौत्रालिङ्गनेन परिपूर्णमनोरथा ॥
इत्येवं कथितं श्रुत्वा श्रीकृष्णाख्यानमुत्तमम् ।
पदे पदे सुन्दरञ्च किं भूयः श्रोतुमिच्छसि ॥ ९१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे तालभक्षणप्रसङ्गे वलिपुत्रमोक्षणं नाम चतुर्विंशतितमोऽध्यायः ।

---

# पञ्चविंशोऽध्यायः

## दुर्वाससं प्रति औरवशापः ।

नारद उवाच ।

...तं किमद्भुतं ब्रह्मन् हरेश्चरितमङ्गलम् । विशेषतस्तव मुखे ह्यतीव सुमनोहरम् ॥ १
मृतायां मुनिकन्यायां शापाद् दुर्वाससो मुने ।
समागत्य किं चकार तन्मे ब्रूहि तपोधन ॥ २ ॥

श्रीनारायण उवाच ।

...रस्वतीनदीतीरे तपस्यां कुर्वतो मुनेः । पपात धौतमूर्ध्वाच्च धार्यमाणञ्च वायुना ॥३॥
...थिव्यां पतितंवस्त्रे तपस्त्यक्त्वा मुनीश्वरः । ध्यानेन बुबुधे सर्वं कन्यासम्बन्धिसङ्कटम्
...गाम शोकाविष्टोऽपि तूर्णं जामातुराश्रमम् । सिषेचपृथिवीरेणून् शश्वन्नयनविन्दुना
...त्यालयसमीपञ्च विप्रः कातरमानसः । हे वत्से कन्दलीत्येवमुवाच च पुनः पुनः ॥
...श्वशुरस्य स्वरं ज्ञात्वा दुर्वासा भयविह्वलः । वहिर्बभूव शीघ्रञ्च पपात चरणाम्बुजे ॥७॥
...पस्य श्वशुरं शोकाद्विललाप भृशं पुनः । संप्राप्य चेतनां शीघ्रमुवाच तं पुरस्थितम् ॥

जामातरं शोकयुक्तं भीतं प्रणतकन्धरम् । महाशोकादश्रुपूर्णरक्तपङ्कजलो
कोपात् कम्पितवान् शश्वत् संत्रस्तः स्फुरिताधरः ॥ ६ ॥

औंर्व उवाच ।

अत्र ब्रह्मत्रिवंश्य पौत्रस्त्वं जगतीपतेः । स्वल्पदोषे बहुतरः कृतो दण्डस्त्वया
त्वज्जन्म शङ्करांशेन शिष्यस्तस्य जगद्गुरोः ।
वेदवेदाङ्गविज्ञश्च सर्वज्ञो गुणवान् स्वयम् ॥ ११ ॥

अनुसूया महासाध्वी कमलांशा तव प्रसूः । न जाने केन दोषेण तव वैतादृशी म
गुणवान् जनको यस्य माता गुणवती सती ।
तयोः पुत्रो दयाहीनो गतिः सूक्ष्मा श्रुतेरहो ॥ १३ ॥
मम प्राणाधिका कन्या मुदा त्वयि समर्पिता ।
महागुणान्विता स्वल्पदोषेण परिमिश्रिता ॥ १४ ॥
वाग्दुष्टायाश्च दण्डो हि परित्यागः श्रुतौ श्रुतः ।
त्वया यदि परित्यक्ता पित्रा यत्नेन पालिता ॥ १५ ॥

मदपत्यं स्वल्पदोषे यतो भस्मीकृतं त्वया । पराभवस्तव महान् भविष्यति न सं
महतां क्षुद्रजन्तूनां सर्वेषां जीविनां सदा ।
स्रष्टा पाता च शास्ता च भगवान् करुणानिधिः ॥ १७ ॥

इत्युक्त्वाच मुनिश्रेष्ठो विलप्यच पुनःपुनः । हेवत्से वत्स इत्युक्त्वा जगामस्वाल
गते मुनीन्द्रे दुर्वासा विललाप भृशं पुनः । ज्ञानेन विस्मृतः शोको बभूव द्विगुण
शोकानलो हि कालेन संच्छन्नो ज्ञानभस्मना । बन्धुदर्शनशुष्केन्धदानेन वर्द्धतां
स्मारं स्मारं प्रियां तत्र विलप्य च पुनः पुनः ।
बोधयित्वा भ्रमं सर्वं तपस्यायां मनो ददौ ॥ २१ ॥

इत्येवं कथितं सर्वं मुनेः शापस्य कारणम् । बभूव तस्य कालेन दुःसहश्च पर

नारद उवाच ।

दुर्वासाः शङ्करस्यांशः शिवतुल्यश्च तेजसा । तेजस्वी को महानेव चकार तत

नारायण उवाच ।

...म्बरीषो हि राजेन्द्रः सूर्य्यवंशसमुद्भवः । श्रीकृष्णचरणाम्भोजे तन्मनः सन्ततं मुने ॥
राज्येषु न भार्य्यासु न पुत्रेषु प्रजासु च । न संसत्सु क्षणं चित्तं पूर्वकर्मार्जितासु च
...ायते ऽहर्निशं धर्मी स्वप्ने ज्ञाने हरिं मुदा । महान् जितेन्द्रियःशान्तो विष्णुव्रतपरायणः
...ादशीव्रतरतः कृष्णपूजासु तत्परः । सर्वकर्मसु लिप्तश्च कर्त्ता कृष्णार्पितेषु च ॥
...तीक्ष्णं षोड़शारं तच्चक्रं नाम सुदर्शनम् । तेजसा हरितुल्यञ्च सूर्य्यकोटिसमप्रभम् ॥
...ादिभिः स्तूयमानं पूजितञ्च सुरासुरैः । प्रभुणा रचितं शश्वद्रक्षायै नृपसन्निधौ ॥
...ादशीव्रतं कृत्वा द्वादशीदिवसे सति । स्नात्वा विधायपूजाञ्च कालेन विधिपूर्वकम्
ब्राह्मणान् भोजयित्वा तु भोजनार्थमुवास ह ॥ ३० ॥
...स्मिन्नन्तरे विप्रस्तपस्वी क्षुधितो मुने । दण्डीछत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम्
...ैलोऽतिकृशस्त्रस्तः शुष्ककण्ठौष्ठतालुकः । तत्राजगामभगवान् दुर्वासा नृपतेःपुरः
...च दृष्ट्वा मुनीन्द्रञ्च तमुत्थाय प्रणम्य च । दत्त्वापाद्यञ्च संप्रीत्या स्वर्णसिंहासनं ददौ
तस्मै दत्त्वाशिषं विप्रः समुवास सुखासने ।
पप्रच्छ राजा तं भीतः काज्ञा ते वद मामिति ॥ ३४ ॥
...स्य वचनं श्रुत्वा प्रोवाच मुनिपुङ्गवः । मां भोजय नृपश्रेष्ठ क्षुधार्त्तोऽहमुपागतः ॥
किन्त्वघमर्षणमन्त्रन्तु जप्त्वा याम्यचिरेण हि ।
क्षणं प्रतीक्ष्यतां राजन्नित्युवाच गतो मुनिः ॥ ३६ ॥
...विप्रे तु राजर्षिश्चिन्तां प्राप दुरत्ययाम् । विलोक्य विगतप्रायां द्वादशीं भयसंयुतः
...स्मिन्नन्तरे तत्र समायान्तं गुरुं मुदा । नत्वा निवेद्य सर्वन्तु नृपतिः समुवाच ह ॥
...ातिमुनिशार्दूलःप्रयातिद्वादशीतिथिः । सङ्कटेऽस्मिन्विधेयञ्च विविच्यविधिपूर्वकम्
शीघ्रं वद मुनिश्रेष्ठ भद्राभद्रञ्च मामिति ॥ ३९ ॥
...ा नृपोक्तिं त्वरितमुवाच मुनिपुङ्गवः । हितं तथ्यञ्च वेदोक्तं परिणामसुखावहम् ॥

वशिष्ठ उवाच ।

द्वादश्यां समतीतायां त्रयोदश्यान्तु पारणम् ।

उपवासफलं हत्वा व्रतिनं हन्ति निश्चितम् ॥ ४१ ॥
ब्रह्महत्यासमं पापं भवेत्तस्य श्रुतौ श्रुतम् । भक्ष्यद्रव्यं सुरातुल्यमित्याह कमलो
न भोजयित्वा मूढश्चेद्तिथिं समुपस्थितम् ।
स त्रस्तः क्षुधितो भुङ्क्ते कुम्भीपाके व्रजेद् ध्रुवम् ॥ ४३ ॥
शतवर्षं तत्र तिष्ठन्नरश्चाण्डालतां व्रजेत् । व्याधियुक्तो दरिद्रश्च भवेज्जन्मनि जन्म
अतोऽतिसूक्ष्मं किं ब्रूमोऽधुना परमसंकटे । रक्षां कुरु द्वयोर्धर्मं समालोक्य यदी
उपवासफलं रक्ष कृष्णस्य चरणोदकम् । भुक्त्वा शीघ्रमपो राजन्तद्रक्षणमम
इत्युक्त्वा ब्रह्मणः पुत्रो विरराम महामुने ।
बुभुजे तज्जलं किञ्चित् कृष्णपादाम्बुजं स्मरन् ॥ ४७ ॥
एतस्मिन्नन्तरे ब्रह्मन्नाजगाम मुनीश्वरः । चिच्छेद कोपात्सर्वज्ञः स्वजटां नृपतेः
ततः समुत्थितः शीघ्रं पुरुषोऽग्निशिखोपमः । खड्गहस्तो महाभीमो राजेन्द्रं हन्तु
हरेश्चक्रञ्च तं दृष्ट्वा सूर्य्यकोटिसमप्रभम् । चिच्छेद कृत्यापुरुषं ब्राह्मणं छेत्तुमुद्यत
दृष्ट्वा सुदर्शनं विप्रो दुद्राव भयविह्वलः । द्विजः पश्चात्तं ददर्श ज्वलदग्निशिखो
ब्रह्माण्डक्रमणं कृत्वा निर्विण्णोऽतिभयाकुलः । तञ्च मत्वा जगन्नाथं ब्रह्माणं
त्राहि त्राहीत्येवमुक्त्वा विवेश ब्रह्मणः सभाम् । उत्थाय ब्रह्मा विप्रेन्द्रं पप्रच्छ
सर्वं स कथयामास वृत्तान्तं मूलतोऽधिकम् ।
श्रुत्वा ब्रह्मा निशश्वास तमुवाच भयाकुलः ॥ ५४ ॥

ब्रह्मोवाच ।

हरिदासं वत्स शप्तुं गतोऽसि कस्य तेजसा । रक्षिता यस्य भगवान्तत्कोहन्ता
क्षुद्राणां महताञ्चैव भक्तानां रक्षणाय च । ररक्ष सन्ततञ्चक्रं श्रीहरिर्भक्तवत्स
यो मूढो वैष्णवं द्वेष्टि विष्णुप्राणसमं द्विज । तस्य संहारकर्तारं संहर्तुमीश्वरो
शीघ्रं स्थानान्तरं गच्छ वत्स-त्राणं न चाधुना ।
अन्यथा त्वां मया सार्धं हनिष्यति सुदर्शनम् ॥ ५८ ॥
किं ब्रह्मलोकं ब्रह्माण्डं दग्धुं शक्तं क्षणेन यत् ।

तेजसा विष्णुतुल्यं यत् केनान्येन निवार्यते ॥ ५९ ॥

...ह्मणो वचनं श्रुत्वा ततो दुद्राव ब्राह्मणः । त्रस्तो जगाम कैलासं शङ्करं शरणं भिया
...पानिधान मां रक्षेत्युवाच शङ्करं भिया । न हि पप्रच्छ कुशलं सर्वज्ञो ब्राह्मणं शिवः
...वाच दीनदीनेशः संहर्ता जगतां क्षणात् । स्थिरो भव द्विजश्रेष्ठ मदीयं वचनं शृणु ॥

शङ्कर उवाच ।

...त्रस्त्वं जगतां धातुरत्रेश्च तनयो मुने । वेदज्ञातासि सर्वज्ञ मूर्खतुल्यन्तु कर्म ते ॥
...देषु च पुराणेषु चेतिहासेषु सर्वतः । निरूपितो यः सर्वेशस्तं न जानासि मूढवत् ॥

अहं ब्रह्मा च रुद्रश्च आदित्या वसवस्तथा ।
धर्मेन्द्रौ च सुराः सर्वे मुनीन्द्रा मनवस्तथा ॥ ६५ ॥
आविर्भूतास्तिरोभूता यस्य भ्रूभङ्गलीलया ।
तस्य प्राणाधिकं भक्तं हंसि त्वं कस्य तेजसा ॥ ६६ ॥
अहं ब्रह्मा च कमला दुर्गा वाणी च राधिका ।
न हि भक्तात्पराः प्रेम्णा भक्ताश्च सर्वतः प्रियाः ॥ ६७ ॥

...द्रांश्च महतो भक्तान् शश्वद्रक्षति यत्नतः । सर्वान्तरात्मा भगवान् चक्रेण दुःसहेन च
...युज्य चक्रंदुर्वार्य्यं स्वात्मतुल्यश्चतेजसा । तथापि न प्रतीतिश्चस्वयंगच्छतिरक्षितुम्
...कीयगुणनाम्नाश्च श्रवणादतिसंभ्रमः । भक्तसङ्गे भ्रमत्येव छायेव सन्ततं हरिः ॥

कान्ता प्राणाधिका शश्वन्नहि कोऽपि ततोधिकः ।
भक्तान् द्वेष्टि स्वयं सा चेत्तूर्णं त्यज्यति तां प्रभुः ॥ ७१ ॥

...र्वेषाञ्च प्रिया विप्राः स्वशरीरादपि द्विज । ब्राह्मणेभ्यः प्रिया भक्ताःप्राणेभ्यश्चहरेरपि॥

ईश्वरस्य प्रियः को वाप्रियः को वा जगत्त्रये ।
यः शिष्टस्तं भजेच्छश्वद् ध्यायते सततं सदा ॥ ७३ ॥

...हति प्रलये ब्रह्मन् ब्रह्माण्डौघे जलप्लुते । न तत्र नाशो भक्तानां सर्वेषाञ्च भविष्यति
...ज ब्राह्मण गोविन्दं स्मर तस्य पदाम्बुजम् । सर्वापदो विनश्यन्ति श्रीहरेः स्मरणादपि
...ज शीघ्रञ्च वैकुण्ठं वैकुण्ठः शरणं तव । दास्यत्येवाभयं तुभ्यं करुणासागरो विभुः ॥

एतस्मिन्नन्तरे व्याप्तं कैलासं चक्रतेजसा । यथा च सूर्य्यकिरणैः सुप्रदीप्तं मही
दग्धा ज्वालाकरालैश्च सर्वे कैलासवासिनः । त्राहि त्राहीत्येवमुक्त्वा शङ्करं श
दृष्ट्वा चक्रं दुर्विषहं शङ्करः करुणानिधिः । पार्वत्या सह संप्रीत्या ब्राह्मणाय

तेजः सत्यं तपः सत्यं यदि चेच्चिरसञ्चितम् ।
कृतापराधो भीतश्च द्विजो भवतु विज्वरः ॥ ८० ॥

पार्वत्युवाच ।

यत् प्रभोर्मम पुण्येषु ब्राह्मणः शरणागतः ।
ममाशिषा महाभीत्या शीघ्रं भवतु विज्वरः ॥ ८१ ॥

इत्येवमुक्त्वा कृपया विरराम शिवा शिवः । मुनिः प्रणम्य देवेशं वैकुण्ठं शरणं
गत्वा वैकुण्ठभवनं मनोयायी मुनीश्वरः । दृष्ट्वा सुदर्शनं पश्चाद्विवेशान्तःपुरं
ददर्श श्रीहरिं विप्रो रत्नसिंहासनस्थितम् । शङ्खचक्रगदापद्मधरं पीताम्बरं परम्

श्यामं चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम् ।
रत्नालङ्कारशोभाढ्यं रत्नमालाविभूषितम् ॥ ८५ ॥

ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् । सद्रत्नसाररचितं किरीटोज्ज्वलशेखर
पार्षद्प्रवरैन्द्रैश्च सेवितं श्वेतचामरैः । पद्मासेवितपादाब्जं सरस्वत्या स्तुतं
सुनन्दनन्दकुमुदप्रचण्डादिभिरावृतम् । गुणानुवादं गायन्तं तन्त्रैः पश्यन्तर्मा
एवम्भूतं प्रभुं दृष्ट्वा दण्डवत्प्रणनाम च । तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वर

दुर्वासा उवाच ।

त्राहि मां कमलाकान्त त्राहि मां करुणानिधे ।
दीनबन्धोऽतिदीनेश करुणासागर प्रभो ॥ ९० ॥

वेदवेदाङ्गसंस्रष्टुर्विधातुश्च स्वयं विधे । मृत्योर्मृत्युः कालकाल त्राहिमां स
संहारकर्तुः संहारः सर्वेशः सर्वकारण । महाविष्णुतरोर्बीज रक्ष मां भवसा
शरणागतशोकार्तभयत्राणपरायण । भगवन्नव मां भीतं नारायण, नमोस्तु ते

वेदैश्चाद्यश्च यद्वस्तु वेदाः स्तोतुं न च क्षमाः ।

सरस्वती जड़ीभूता किं स्तुवन्ति विपश्चितः ॥ ६४ ॥
[शे]षः सहस्रवक्त्रेण यं स्तोतुं जड़तां व्रजेत् । पञ्चवक्त्रो जड़ीभूतो जडीभूतश्चतुर्मुखः
श्रुतयः स्मृतिकर्त्तारो वाणी चेत् स्तोतुमक्षमा ।
कोऽहं विप्रश्च वेदज्ञः शिष्यः किं स्तौमि मानद ॥ ६६ ॥
[...]नाश्च महेन्द्राणामष्टाविंशतिमे गते । दिवानिशं यस्य विधेरष्टोत्तरशतायुषः ॥ ६७॥
[...]पातो भवेद्यस्य चक्षुरुन्मीलनेन च । तमनिर्वचनीयञ्च किं स्तौमि पाहिमांप्रभो ॥
[...]त्येवं स्तवनं कृत्वा पपात चरणाम्बुजे । नयनाम्बुजनीरेण सिषेच भयविह्वलः ॥ ६९॥
[दु]र्वाससा कृतंस्तोत्रं हरेश्च परमात्मनः । पुण्यदं सामवेदोक्तं जगन्मङ्गलननामकम् ॥
[यः] पठेत्संकटग्रस्तो भक्तियुक्तश्च संयुतः । नारायणस्तं कृपया शीघ्रमागत्य रक्षति ॥
[रा]जद्वारे श्मशाने च कारागारे भयाकुले । शत्रुग्रस्ते दस्युभीते हिंस्रजन्तुसमन्विते ॥
[वे]ष्टितेराजसैन्येन मग्नपोते महार्णवे । स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥
[इ]ति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे दुर्वाससाकृतं श्रीकृष्णस्तोत्रं समाप्तम्

नारायण उवाच ।

[मु]नेश्च स्तवनं श्रुत्वा भगवान् भक्तवत्सलः । प्रहस्योवाच मधुरं पीयूषवृष्टिवन्मुदा ॥

श्रीभगवानुवाच ।

[उ]त्तिष्ठोत्तिष्ठ भद्रन्ते भविष्यति वरेण मे । किन्तु मे वचनं नित्यं शृणुसत्यंसुखावहम्
अन्येषाञ्च भवेज्ज्ञानं श्रुत्वा शास्त्रं सतां मुखात् ।
स्वमूर्त्तिमन्ति शास्त्राणि भवेत् सन्तश्चरन्ति हि ॥ १०६ ॥
[ध]र्मवेदविरुद्धञ्च सर्वेषामतिगर्हितम् । करोति विद्वांश्चेत् ज्ञात्वा सच जीवन्मृताधिकः
[पु]राणेषु च वेदेषु चेतिहासेषु ब्राह्मण । वैष्णवानाञ्च महिमा श्रुतः सर्वैश्च सर्वतः ॥
[अ]हं प्राणा वैष्णवानां ममप्राणाश्च वैष्णवाः । तानेव द्वेष्टियो मूढ़ो ममासूनाञ्च हिंसकः
पुत्रान् पौत्रान् कलत्रांश्च राज्यं लक्ष्मीं विहाय च ।
ध्यायन्ते सततं ये मां को में तेभ्यः परः प्रियः ॥११०॥
[प]रा सक्ता न मे प्राणा न च लक्ष्मीर्न शङ्करः । न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः

न ब्राह्मणो न वेदाश्च न वेदजननी परा । न गोपी नच गोपाला न राधा प्राणतः
इत्येवं कथितं सर्वंसत्यं सारञ्च वास्तवम् । न प्रशंसापरं तेषां तेच प्राणाधिका
मांद्विषन्तिच ये मूढ़ाज्ञानहीनाश्च वञ्चिताः । आत्मानंयेन जानन्ति तेयान्तिनिरय
ये द्विषन्तिच मद्भक्तान् प्राणानामधिकंप्रियान् । तेषां शास्तात्वहं तूर्णंपरत्र निरय
प्रभावोऽहञ्च सर्वेषामीश्वरःपरिपालकः । नचव्यापीस्वतन्त्रोऽहं भक्ताधीनोदिवा
गोलोके वाथ वैकुण्ठे द्विभुजश्च चतुर्भुजम् । रूपमात्रमिदं शश्वत्प्राणा मे भक्त
यदुक्तं भक्तदत्तञ्च भक्षणीयञ्च तन्मम । अभक्ष्यं द्रव्यमन्येन दत्तञ्चेदमृतोपमम् ॥
अम्बरीषं नृपश्रेष्ठं निरीहं तमहिंसकम् । कथं हंसि दयाशीलं सर्वप्राणिहिते
दयां कुर्वन्ति ये सन्तः सततं सर्वजन्तुषु । तान् द्विषन्तिच ये मूढ़ास्तेषां हन्ता
भक्तानां हिंसकं शत्रुमहं रक्षितुमक्षमः । अम्बरीषालयं गच्छ स त्वां रक्षितुमी

नारायण उवाच ।

इदं वाक्यञ्च तच्छ्रुत्वाब्राह्मणोभयविह्वलः । विषण्णमानसस्तस्थौस्मरन्कृष्णपदा
एतस्मिन्नन्तरे ब्रह्मा भवान्या सह शङ्करः । धर्मश्चेन्द्रादयो देवा आजग्मुर्मुनिपु
प्रणम्य तुष्टुवुः सर्वे परमात्मानमीश्वरम् । पुलकाञ्चितसर्वाङ्गा भक्तिनम्रात्मक

ब्रह्मोवाच ।

स्वात्मस्वरूप निर्लिप्त भक्तानुग्रहकातर । भक्तापराधजनकं रक्ष ब्राह्मणपुङ्गवम् ॥

महादेव उवाच ।

दीनबन्धो जगन्नाथ नायंविप्रो जगद्बहिः । कृतापराधं दीनञ्च पाहीमंशरणागतम् ॥

पार्वत्युवाच ।

भक्त एवाम्बरीषस्ते न द्विजा न सुरा वयम् । सर्वेषामीश्वरस्त्वञ्च रक्ष विप्रं

धर्म उवाच ।

सर्वेषां जनकस्त्वञ्च पाता दण्डकृदीश्वरः । शिशुहेतोः शिशुं हन्ति पितेत्येवं

इन्द्र उवाच ।

कृपया समता शश्वत्सर्वेषु जीविषु प्रभो । अपराधफलं भूतमधुना पातुमर्हसि ।

रुद्र उवाच ।

...शान्तिं कर्तुं समुचितमुचितं साम्प्रतं कुरु । कृतकुण्ठस्य मूलस्य पालनं कर्तुमर्हसि ॥

दिक्पाल उवाच

...कृतापराधं विप्रञ्च छेत्तुमर्हसि न श्रुतौ । अपराधशमं कृत्वा सदा पाति सदीश्वरः ॥

ग्रहा ऊचुः ।

...यो द्वेष्टि वैष्णवं मूढस्तं रुष्टाः सर्वदेवताः । पीड़ां कुर्मो वयं शश्वत्पश्चात्त्वं पातुमर्हसि

मुनय ऊचुः ।

...नाथ विप्रे पराभूते सर्वे जीवन्मृता वयम् । दण्डं विधातुमेकस्य भवेल्लज्जा स्वजातिषु ॥

अत्रिरुवाच ।

त्वयैव दत्तः पुत्रो मे क्रोधी त्वत्सेवकः सदा ।

न कं बिभेति त्रैलोक्ये तेजस्वी तेजसा तव ॥ १३४ ॥

लक्ष्मीरुवाच ।

...क्षमापराधं भगवन् ब्राह्मणं शरणागतम् । स्तुवन्ति देवा विप्राश्च न विप्रं हन्तुमर्हसि ॥

सरस्वत्युवाच ।

...बोधयिष्यामि देवानां जनकं कामहंश्रुतिम् । भगवान्स्वामी सर्वेषां सर्वांश्चपातुमर्हसि

पार्षदा ऊचुः ।

...भवतः स्मृतिमात्रेण सर्वेषां सर्वमङ्गलम् । भवेत्सर्वापदो यान्ति पाहीमं शरणागतम् ॥

नर्त्तका ऊचुः ।

...दारिद्र्यभञ्जन वयं भिक्षुकास्तव सन्ततम् । भिक्षां नो साम्प्रतं देहिपरित्राणं द्विजस्यच

...एतेषां स्तवनं श्रुत्वा प्रभुः शरणवत्सलः । प्रहस्योवाच वचनं सर्वसन्तोषकारणम् ॥

श्रीभगवानुवाच ।

...सर्वे शृणुत मद्वाक्यं नीतियुक्तं सुखावहम् । विप्ररक्षां करिष्यामि युष्माकमाज्ञयाध्रुवम्

...किं त्वयं यातु वैकुण्ठादम्बरीषालयं पुनः । करोतु पारणं तत्र राज्ञः सुप्रीतये मुनिः ॥

...विप्रस्तस्यातिथिर्भूत्वा निर्दोषं शप्तुमुद्यतः । सुदर्शनन्तु तं रक्ष्यं ब्राह्मणं हन्तुमुद्यतम् ॥

पूर्णं वर्षमयं भीतो भ्रमत्येव भुवं मुदा । उपवासी स राजेन्द्रः सस्त्रीकश्च शुचान्वि
ततोऽहमुपवासी च भक्तोपवासकारणात् । स्तनान्धं बालकं दृष्ट्वा न भुङ्क्ते जनने
ममाशिषा मुनिश्रेष्ठः सद्यो भवतु विज्वरः । पथि तत्रास्य हिंसाञ्च मच्चक्रं न करि

अहमेवाद्य निश्चिन्तः सुखं भोक्ष्यामि निश्चितम् ।
भक्तदत्तञ्च यद्वस्तु प्रीत्या कृत्वा सुधोपमम् ॥ १४६ ॥

लक्ष्मीदत्तञ्च यद्द्रव्यं न चाहं भोक्तुमीश्वरः । विना भक्तप्रदानेन न तृप्तिं दातुमीश्व
हे मुनीन्द्र महाप्राज्ञ गच्छ वत्स नृपालयम् । सर्वे देवाश्च दैत्यश्च गच्छन्तु मुनयो
इत्युक्त्वा श्रीहरिस्तूर्णं ययौ स्वान्तःपुरंमुदा । ययुःसर्वे मुदा युक्ताःप्रणम्य जगद्गु
ब्राह्मणश्च मनोयायी जगाम हरिमन्दिरम् । सुदर्शनञ्च तच्चक्रं सूर्यकोटिसमप्र
उपोष्य वत्सरं राजा शुष्ककण्ठौष्ठतालुकः । सिंहासनस्थो ददर्श पुरतो मुनिपुङ्ग

उत्थाय सम्भ्रमात् सद्यः प्रणम्य सादरं मुदा ।
भोजयित्वा तु मिष्टान्नं ब्राह्मणं बुभुजे स्वयम् ॥ १५२ ॥

भुक्त्वा तुष्टो द्विजश्रेष्ठो युयुजे परमाशिषम् । जगाम स्वालयं तूर्णं प्रशशंस पुनःपु

उवाच पथि विप्रेन्द्रो मनसा विस्मयाकुलः ॥ १५३ ॥
महात्म्यं दुर्लभमहो वैष्णवानामिति द्विजः ॥ १५४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे मुनिमोक्षणप्रस्तावो नाम पञ्चविंशोऽध्यायः ।

---

## षड्विंशोऽध्यायः

### एकादशीव्रतविधानवर्णनम् ।

नारद उवाच ।

द्वादशीलङ्घने दोषः श्रुतस्त्वन्मुखतो मुने । पराभवो मुनेश्चैव नृप त्राणं हरेर्हो ।

अधुना श्रोतुमिच्छामि सर्वेषामीप्सितञ्च मे। एकादशीव्रतस्यास्य विधानं वद निश्चितम्
अहो श्रुतौ श्रुतं किञ्चिन्मतभेदान्न निश्चितम्।
श्रुतीनां कारणमुखाच्छ्रोतुं कौतूहलं मम॥ ३॥

नारायण उवाच।

एकादशीव्रतमिदं देवानामपि दुर्लभम्। श्रीकृष्णप्रीतिजनकं तपः श्रेष्ठं तपस्विनाम्॥
देवानाञ्च यथा कृष्णो देवीनां प्रकृतिर्यथा। आश्रमाणां यथा विप्रो वैष्णवानां यथा शिवः
यथा गणेशः पूज्यानां यथा वाणी विपश्चिताम्।
शास्त्राणाञ्च यथा वेदास्तीर्थानां जाह्नवी यथा॥ ६॥
तैजसानां यथा स्वर्णं प्राणिनां वैष्णवो यथा।
धनानाञ्च यथा विद्या सङ्गिनाञ्च यथा प्रिया॥ ७॥
प्रमथानां यथा रुद्रः श्रेयसाञ्च यथा मतिः। आत्मा यथेन्द्रियाणाञ्च चञ्चलानां यथा मनः
स्त्रीणां यथा माता बन्धूनाञ्च यथा पतिः। बलिष्ठानां यथा दैवं कालः कलयतां यथा
सुशीलश्चैव मित्राणां शत्रूणां रुग्यथा मुने।
यथा कीर्तिः कीर्तिमतां गृहिणाञ्च यथा गृहम्॥ १०॥
यथा खलो हिंसकानां दुष्टानाञ्चैव पुंश्चली। तेजस्विनां ग्रहेशश्च सहिष्णुनां यथा क्षितिः
यथाऽमृतं भक्षणानां दाहकानां यथानलः। यथा श्रीर्धनदातॄणां सतीनाञ्च यथा सती॥
ईशानां यथा ब्रह्मा सरितां सागरो यथा। यथा साम श्रुतीनाञ्च गायत्रीछन्दसां यथा
वृक्षाणाञ्च यथाऽश्वत्थः पुष्पाणां तुलसी यथा।
यथा मार्गो हि मासानामृतूनाञ्च यथा मधुः॥ १४॥
आदित्यानां यथा सूर्यो रुद्राणां शङ्करो यथा। यथा भीष्मो वसूनाञ्च वर्षाणां भारतं यथा
ऋषीणां यथा त्वञ्च ब्रह्मर्षीणां यथा भृगुः। नृपाणाञ्च यथा रामः सिद्धानां कपिलो यथा
यथा सनत्कुमारश्च योगिनां ज्ञानिनां वरः। ऐरावतो गजेन्द्राणां पशूनां शरभो यथा
यथा हिमाद्रिः शैलानां मणीनां कौस्तुभो यथा।
सरस्वती नदीनाञ्च यथा पुण्यस्वरूपिणी॥ १८॥

गन्धर्वाणां चित्ररथो यथा श्रेष्ठश्च नारद। यथा कुबेरो यक्षाणां सुमाली रक्षसां
यथा श्रेष्ठा च नारीणां शतरूपा वरा परा। मनूनाञ्च तथा श्रेष्ठः स्वयं स्वायम्भुवो

सुन्दरीणां यथा रम्भा यथा माया च मायिनाम्।
एकादशीव्रतमिदं व्रतानाञ्च वरं तथा ॥ २१ ॥

कर्त्तव्यश्च चतुर्णाञ्च वर्णानां नित्यमेव च। यतीनां वैष्णवानाञ्च ब्राह्मणानां वि
सत्यं सर्वाणि पापानि ब्रह्महत्यादिकानि च। सत्येवौदनमाश्रित्य श्रीकृष्णव्रतवा

भुक्त्वैतानि च पापानि यो भुङ्क्ते तत्र मन्दधीः।
इहातिपातकी सोऽपि यात्यन्ते नरकं ध्रुवम् ॥ २४ ॥
एकादशीप्रमाणानि युगसंख्याकृतानि च।
कुम्भीपाके महाघोरे स्थित्वा चाण्डालतां व्रजेत् ॥ २५ ॥

गलितव्याधियुक्तश्च ततः सप्तसु जन्मसु। पश्चान्मुक्तो भवेत्पापादित्याह कमले
इत्येवं कथितं ब्रह्मन् यो दोषस्तत्र भोजने। द्वादशीलङ्घने दोषो मयोक्तश्च श्रुत
दशमीलङ्घने दोषं निबोध कथयामि ते। पुराश्रुतो धर्मवक्त्राद्वेदसारोद्धृतोऽपि

दशमीं यः कलामात्रां मूढो ज्ञानेन लङ्घयेत्।
याति श्रीस्तद्गृहात्तूर्णं शापं दत्त्वा तु दारुणम् ॥ २६ ॥

इह तद्वंशहानिश्च यशोहानिर्भवेद् ध्रुवम्। अन्ते मन्वन्तरशतमन्धकूपे वसेद्
दशम्येकादशी वापि द्वादशी यत्र वासरे। तत्र भुक्त्वा परदिने उपोष्य व्रतमा
द्वादश्याञ्च व्रतं कृत्वा त्रयोदश्याञ्च पारणम्। द्वादशीलंघने दोषो व्रतिनां तत्र
सम्पूर्णैकादशी यत्र प्रभाते किञ्चिदेव सा। तत्रोपोष्या द्वितीया च परा चेद्यदि
षष्टिदण्डात्मिका यत्र प्रभाते च तिथित्रयम्। कुर्वन्तिगृहिणः पूर्वञ्चैव यत्या
परत्रानशनं कृत्वा नित्यकृत्यं समाचरेत्। व्रते जागरणं सर्वं पूर्वत्रैवाचरेद् बुधः
तत्पूर्वदिवसे नित्यं व्रतं कृत्वा परेऽहनि। एकादश्यां व्यतीतायां पारणन्तु स

वैष्णवानां यतीनाञ्च विधवानां तथैव च।
सर्वाः समा उपोष्यास्ता भिक्षूणां ब्रह्मचारिणाम् ॥ २७ ॥

[...]कामेव तु कुर्वन्ति गृहिणो वैष्णवेतराः । न कृष्णालङ्घने दोषस्तेषां वेदेषु नारद ॥
शयनी बोधनी मध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥ ३६ ॥
[...]येवं कथितो ब्रह्मन्निर्णयो यः श्रुतौ श्रुतः । व्रतस्यास्य विधानञ्च निबोधकथयामिते
[...]त्वा हविष्यं पूर्वाह्ने न च भुङ्क्ते पुनर्जलम् । एकाकी कुशशय्यायां नक्तंशयनमाचरेत्
ब्राह्मे मुहूर्त्ते चोत्थाय प्रातःकृत्यं विधाय च ।
नित्यकृत्यं विधायाथ ततः स्नानं समाचरेत् ॥ ४२ ॥
व्रतोपवासं सङ्कल्प्य श्रीकृष्णप्रीतिपूर्वकम् ।
कृत्वा सन्ध्यातर्पणञ्च विधायाह्निकमाचरेत् ॥ ४३ ॥
[...]त्यपूजादिने कृत्वा व्रतद्रव्यं समाहरेत् । कृत्वा षोड़शोपचारं प्रहृष्टं विधिबोधितः
[...]ासनं वसनं पाद्यमर्घ्यं पुष्पानुलेपनम् । धूपं दीपञ्च नैवेद्यं यज्ञसूत्रञ्च भूषणम् ॥४५॥
[...]यस्नानीयंताम्बूलं मधुपर्कं पुनर्जलम् । एतान्याहृत्य दिवसे व्रतं नक्तं समाचरेत् ॥
उपविश्यासने पूतो धृत्वा धौतेयवाससी ।
आचम्य श्रीहरिं नत्वा स्वतिवाचनमाचरेत् ॥ ४७ ॥
[...]रोप्य मङ्गलघटं धान्याधारे शुभे क्षणे । फलशाखाचन्दनाक्तं वेदोक्तं मुनिभिर्मुदा ॥
[...]षट्कं समावाह्य पृथक् धान्यैः समाचरेत् । पूजां पञ्चोपचारैश्च प्रकृष्टैश्च विचक्षणः
गणेश्वरं दिनकरं वह्निं विष्णुं शिवं शिवाम् ।
सम्पूज्यैतान् प्रणम्याथ व्रतं कुर्य्याद्धरिं स्मरन् ॥ ५० ॥
नाराध्य वेदषट्कञ्च यदि कर्म समाचरेत् ।
नित्यं नैमित्तिकञ्चापि तत्सर्वं निष्फलं भवेत् ॥ ५१ ॥
[...]येवं कथितं सर्वं व्रताङ्गभूतमेव च । कण्वशाखोक्तमिष्टञ्च व्रतं शृणु महामुने ॥५२॥
सामवेदोक्तध्यानेन ध्यात्वा कृष्णं परात्परम् ।
पुष्पञ्च शिरसि न्यस्य पुनर्ध्यानं समाचरेत् ॥ ५३ ॥
[...]यानं शृणु निगूढ़ञ्च सर्वेषामपि वाञ्छितम् । न प्रकाश्यमभक्ताय भक्तप्राणाधिकंपरम्

नवीननीरदो यद्वत् श्यामसुन्दरविग्रहम् । शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनु
शरत्सूर्य्योदयाब्जानां प्रभामोचनलोचनम् । स्वाङ्गसौन्दर्यशोभाभी रत्नभूषण
गोपीलोचनकोणैश्च प्रसन्नैरतिसूचकैः । शश्वन्निरीक्ष्यमाणं तत्प्राणैरिव वि
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् । राधावक्त्रशरच्चन्द्रसुधापानचको

कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ।
पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ५६ ॥

सद्रत्नसारनिर्माणं किरीटोज्वलशेखरम् । विनोदमुरलीहस्तन्यस्तं पूज्यं सुरासु
ध्यानासाध्यं दुराराध्यं ब्रह्मादीनाञ्च वन्दितम् । कारणं कारणानां यं तमीश्वर
ध्यात्वाऽनेन तमावाह्य चोपहाराणि षोड़श । दत्त्वा संपूजयेद्भक्त्या मन्त्रैरभिध
आसनं स्वर्णनिर्माणं रत्नसारपरिच्छदम् । नानाचित्रविचित्राढ्यं गृह्यतां परमे
वह्निप्रक्षालितं वस्त्रं निर्मितं विश्वकर्मणा । मूल्यानिर्वचनीयञ्च गृह्यतां राधिक
पादप्रक्षालनार्हञ्च सुवर्णपात्रसंस्थितम् । सुवासितं शीतलञ्च गृह्यतां करुणानि
इदमर्घ्यं पवित्रञ्च शङ्खतोयसमन्वितम् । पुष्पं दूर्वाचन्दनाक्तं गृह्यतां भक्तव
सुवासितं शुक्लपुष्पं चन्दनागुरुसंयुतम् । सद्यस्ते प्रीतिजनकं गृह्यतां सर्वकारण
चन्दनागुरुकस्तूरीकुङ्कुमोशीरमुत्तमम् । सर्वेप्सितमिदं कृष्ण गृह्यतामनुलेपनम् ।
रसो वृक्षविशेषस्य नानाद्रव्यसमन्वितः । सुगन्धियुक्तः सुखदो धूपोऽयं प्रति
दिवानिशं सुप्रदीप्तो रत्नसारविनिर्मितः । पुनर्ध्वान्तनाशबीजं दीपोऽयं प्रतिगृह्य

नानाविधानि द्रव्याणि स्वादूनि सुरभीणि च ।
चोष्यादीनि पवित्राणि स्वात्माराम प्रगृह्यताम् ॥ ७१ ॥

सावित्रीग्रन्थिसंयुक्तं स्वर्णतन्तुविनिर्मितम् । गृह्यतां देवदेवेश रचितं चारु
अमूल्यरत्नरचितं सर्वावयवभूषणम् । त्विषा जाज्वल्यमानञ्च गृह्यतां नन्दनन्द
प्रधानो वर्णनीयश्च सर्वमङ्गलकर्मणि । प्रगृह्यतां दीनबन्धो गन्धोऽयं मङ्गलप्रद
धात्रीश्रीफलपत्रोत्थं विष्णुतैलंमनोहरम् । वाञ्छितं सर्वलोकानांभगवन् प्रति
वाञ्छनीयश्च सर्वेषां कर्पूरादिसुवासितम् । मया निवेदितं नाथ ताम्बूलं प्रति

र्वेषां प्रीतिजनकं सुमिष्टं मधुरं मधु । सद्रत्नसारपात्रस्थं गोपीकान्त प्रगृह्यताम् ॥
निर्मलं जाह्नवीतोयं सुपवित्रं सुवासितम् । पुनराचमनीयञ्च गृह्यतां मधुसूदन ॥ ७८ ॥
इति षोड़शोपचारान् दत्त्वा भक्तो मुदान्वितः ।
मन्त्रेणानेन पुष्पाणि माल्यं दत्त्वा प्रयत्नतः ॥ ७९ ॥
नाप्रकारपुष्पैश्च ग्रथितं शुक्लतन्तुना । प्रवरं भूषणानाञ्च माल्यञ्च गृह्यतां प्रभो ॥८०॥
ति पुष्पाञ्जलिं दद्यान्मूलमन्त्रेण च व्रती । कुर्य्यात्ततस्तवनंभक्त्यापुटाञ्जलियुतः सुधीः

भक्त उवाच ।

कृष्ण राधिकानाथ करुणासागर प्रभो । संसारसागरे घोरे मामुद्धर भयानके ॥
तजन्मकृतायासादुद्विग्नस्य मम प्रभो । स्वकर्मपाशनिगड़ैर्बद्धस्य मोक्षणं कुरु ॥ ८३॥
तं पादपद्मे ते पश्य मां शरणागतम् । भवपाशभयाद्भीतं पाहि त्वं शरणागतम् ॥
किहीनं क्रियाहीनं विधिहीनञ्च वेदतः । वस्तु मन्त्रविहीनं यत्तत् सम्पूर्णं कुरु प्रभो
लोकविहिताज्ज्ञानात् स्वाङ्गहीने च कर्मणि । त्वन्नामोच्चारणेनैव सर्वं पूर्णं भवेद्धरे
इति स्तुत्वा तं प्रणम्य दत्त्वा विप्राय दक्षिणाम् ।
महोत्सवं विधायाथ कुर्य्याज्जागरणं व्रती ॥ ८७ ॥
त्वा व्रतोपवासञ्च यदि निद्रां निषेवते । पुनरेव जलं भुङ्क्ते व्रतार्धफलभाग्भवेत् ॥
तेन च हविष्यान्नं सकृदेव समाचरेत् । मन्त्रेणानेन विप्रेन्द्र श्रीकृष्णचरणं स्मरन् ॥
अन्नं हि प्राणिनां प्राणा ब्रह्मणा निर्मितं पुरा ।
देहि मे विष्णुरूप त्वं व्रतोपवासयोः फलम् ॥ ९० ॥
वं यः कुरुते भक्त्या भारते व्रतमुत्तमम् । पूर्वान् सप्तपरान् सप्तस्वात्मानमुद्धरेद्ध्रुवम्
तरं भ्रातरञ्चैव श्वश्रूञ्च श्वशुरं सुताम् । जामातरं तथा भृत्यमुद्धरेन्निश्चितं नरः ॥
येवं कथितं विप्र श्रीकृष्णचरितव्रतम् । सुखदं मोक्षदं सारमपरं कथयामि ते ॥९३॥
ति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे एकादशीव्रत-
निरूपणं नाम षड्विंशोऽध्यायः ।

---

# सप्तविंशोऽध्यायः

## गोपीवस्त्रापहरणे जयदुर्गाव्रतकथनम् ।

श्रीनारायण उवाच ।

श्रृणु नारद वक्ष्यामि श्रीकृष्णचरितं पुनः । गोपीनां वस्त्रहरणं वरदानं मनीषित

हेमन्ते प्रथमे मासि गोपिकाः काममोहिताः ।
कृत्वा हविष्यं भक्त्या च यावन्मासं सुसंयुताः ॥ २ ॥
स्नात्वा सूर्य्यसुतातीरे पार्वतीं वालुकामयीम् ।
कृत्वावाह्य च मन्त्रेण पूजां कुर्वन्ति नित्यशः ॥ ३ ॥

चन्दनागुरुकस्तूरीकुङ्कुमैश्च मनोहरैः । नानाप्रकारपुष्पैश्च माल्यैर्बहुविधैरपि ॥ ४

धूपैर्दीपैश्च नैवेद्यैर्वस्त्रैर्नानाफलैर्मुने । मणिमुक्ताप्रवालैश्च वाद्यैर्नानाविधैरपि ।

हे देवि जगतां मातः सृष्टिस्थित्यन्तकारिणि । नन्दगोपसुतं कान्तमस्मभ्यं देहि

मन्त्रणानेन देवेशीपरिहारं विधाय च । ततः कृत्वा तु संकल्पं पूजयेन्मूलमन्त्र

मन्त्रस्तु सामवेदोक्तोऽयातयामः सबीजकः ।
ओं श्रीदुर्गायै सर्वविघ्नविनाशिन्यै नम इति ॥ ८ ॥
पुष्पं माल्यञ्च नैवेद्यं धूपं दीपं तथांशुकम् ।
मन्त्रेणानेन तां भक्त्या ददुः सर्वा मुदान्विताः ॥ ६ ॥

प्रवालमालया भक्त्या चेमं मन्त्रं सहस्रधा । जपं कृत्वाच स्तुत्वाच प्रणेमुः शिर

सर्वमङ्गलमाङ्गल्ये सर्वकामप्रदे शिवे । देहि मे वाञ्छितं देवि नमस्ते शङ्करप्रि

इत्युक्त्वा च नमस्कारं कृत्वा दत्त्वा च दक्षिणाम् ।
नैवेद्यानि च सर्वाणि ब्राह्मणेभ्यो ययुर्गृहम् ॥ १२ ॥

श्रीनारायण उवाच ।

स्तवराजं श्रृणु मुने तुष्टुवुर्येन पार्वतीम् ।

भक्त्या गोपाङ्गनाः सर्वाः सर्वाभीष्टफलप्रदाम् ॥ १३ ॥

जगत्येकार्णवे घोरे चन्द्रसूर्य्यविवर्जिते । अञ्जनाकारतोयेन संप्लुते च चराचरे ॥१४॥

दत्तं पुरा ब्रह्मणे च हरिणा जलशायिना । तस्मै दत्त्वा सर्वमिदं निद्रां भेजे जगत्पतिः

नाभिपद्मे जगत्स्रष्टा मधुना कैटभेन च । पीड़ितः परितुष्टाव मूलप्रकृतिमीश्वरीम् ॥१६

ओं नमो जयदुर्गायै ।

ब्रह्मोवाच ।

त्वं शिवेऽभये माये नारायणि सनातनि । जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥१७

दैत्यनाशार्थवचनो दकारः परिकीर्तितः । उकारो विघ्ननाशार्थवाचको वेदसम्मतः ॥

रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । भयशत्रुघ्नवचनश्चाकारः परिकीर्तितः ॥१९॥

स्मृत्युक्तिस्मरणाद्यस्या एते नश्यन्ति निश्चितम् ।

अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता ॥ २० ॥

विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः ।

दुर्गं नश्यति या नित्यं सा दुर्गा परिकीर्तिता ॥ २१ ॥

दुर्गो दैत्येन्द्रवचनोऽप्याकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्तिता॥

शश्च कल्याणवचन इकारोत्कृष्टवाचकः । समूहवाचकश्चैव वाकारो दातृवाचकः ॥

श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्तिता । शिवराशिर्मूर्त्तिमती शिवा तेन प्रकीर्तिता ॥

शिवो हि मोक्षवचनश्चाकारो दातृवाचकः ।

स्वयं निर्वाणदात्री या सा शिवा परिकीर्तिता ॥ २५ ॥

अभयो भयनाशोक्तश्चाकारो दातृवाचकः । प्रददात्यभयं सद्यः साऽभया परिकीर्तिता॥

राजश्रीवचनो माश्च याश्च प्रापणवाचकः । तां प्रापयति या सद्यःसा मायापरिकीर्तिता

माश्च मोक्षार्थवचनो याश्च प्रापणवाचकः । तंप्रापयतिया नित्यं सा माया परिकीर्तिता

नारायणार्धाङ्गभूता तेन तुल्या च तेजसा । तदा तस्य शरीरस्था तेन नारायणी स्मृता

निर्गुणस्य च नित्यस्य वाचकश्च सनातनः ।

सदा नित्या निर्गुणा या कीर्त्तिता सा सनातनी ॥ ३० ॥

जयः कल्याणवचनो यकारो दातृवाचकः ।
जयं ददाति या नित्यं सा जया परिकीर्त्तिता ॥ ३१ ॥

सर्वमङ्गलशब्दश्च संपूर्णैश्वर्य्यवाचकः । आकारो दातृवचनस्तद्दात्री सर्वमङ्गला ॥
नामाष्टकमिदं सारं नामार्थसहसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥
तस्मै दत्त्वा निद्रितश्च बभूव जगतां पतिः । मधुकैटभौ दुर्गान्तौ ब्रह्माणं हन्तुमुद्यतौ

स्तोत्रेणानेन स ब्रह्मा स्तुतिं नत्वा चकार ह ।
साक्षात् स्तुता तदा दुर्गा ब्रह्मणे कवचं ददौ ॥ ३५ ॥

श्रीकृष्णकवचं दिव्यं सर्वरक्षणनामकम् । दत्त्वा तस्मै महामाया सान्तर्धानं चकार
स्तोत्रं कुर्वन्ति निद्राश्च संरक्ष्य कवचेन वै। निद्रानुग्रहतः सद्यः स्तोत्रस्यैव प्रभावतः
तत्राजगाम भगवान् वृषरूपी जनार्दनः । शक्त्या च दुर्गया सार्धं शङ्करस्य जयाय
सरथं शङ्करं मूर्ध्नि कृत्वा च निर्भयं ददौ। अत्यूर्ध्वं प्रापयामास जया तस्मै जयं
स्तोत्रस्यैव प्रभावेण संप्राप्य कवचं विधिः । वरञ्च कवचं प्राप्य निर्भयं प्राप नि
ब्रह्मा ददौ महेशाय स्तोत्रञ्च कवचं वरम् । त्रिपुरस्य च संग्रामे सरथे पतिते

ब्रह्मास्त्रञ्च गृहीत्वा स सनिद्रं श्रीहरिं स्मरन् ।
स्तोत्रञ्च कवचं प्राप्य जघान त्रिपुरं हरः ॥ ४२ ॥
स्तोत्रेणानेन तां दुर्गां कृत्वा गोपालिकाः स्तुतिम् ।
लेभिरे श्रीहरिं कान्तं स्तोत्रस्यास्य प्रभावतः ॥ ४३ ॥

गोपकन्याकृतं स्तोत्रं सर्वमङ्गलनामकम् । वाञ्छितार्थप्रदं सद्यः सर्वविघ्नविनाशक

त्रिसन्ध्यं यः पठेन्नित्यं भक्तियुक्तश्च मानवः ।
शैवो वा वैष्णवो वापि शाक्तो दुर्गात् प्रमुच्यते ॥ ४५ ॥

राजद्वारे श्मशाने च दावाग्नौ प्राणसङ्कटे । हिंस्रजन्तुभयग्रस्तो मग्नः पोते मह
शत्रुग्रस्ते च संग्रामे कारागारे विपद्गते । गुरुशापे ब्रह्मशापे बन्धुभेदे च दुस्त
स्थानभ्रष्टे धनभ्रष्टे जातिभ्रष्टे शुचान्विते । पतिभेदे पुत्रभेदे खलसर्पविषान्विते
स्तोत्रस्मरणमात्रेण सद्यो मुच्येत निर्भयः । वाञ्छितं लभते सद्यः सर्वैश्वर्य्यम

इहलोके हरेर्भक्तिं दृढाञ्च सततं स्मृतिम् । अन्ते दास्यञ्च लभते पार्वत्याश्च प्रसादतः ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
गोपकन्याकृतं सर्वमङ्गलस्तोत्रं समाप्तम् ।

अनेन स्तवराजेन तुष्टुवुर्नित्यमीश्वरीम् । प्रणेमुः परया भक्त्या यावन्मासं व्रजाङ्गनाः
पूर्णे च मासे च समाप्तिदिवसे तथा । स्नातुं प्रजग्मुर्गोप्यश्च वस्त्राण्याधाय तत्तटे

नानाविधानि द्रव्याणि रत्नमूल्यानि नारद ।
पीतलोहितशुक्लानि चारूणि मिश्रितानि च ॥५३॥

आवृतान्यसंख्यानि तैश्च तीरं सुशोभनम् । चन्दनागुरुकस्तूरीवायुना सुरभीकृतम् ॥
नैवेद्यैश्च बहुविधैः कालदेशोद्भवैः फलैः । धूपैः प्रदीपैः सिन्दूरैः कुङ्कुमैश्च विराजितम् ॥

जले क्रीड़ोन्मुखा गोप्यो बभूवुः कौतुकेन च ।
नग्नाः क्रीड़ाभिरासक्ताः श्रीकृष्णार्पितमानसाः ॥५६॥

दृष्ट्वा कृष्णश्च वस्त्राणि द्रव्याणि विविधानि च ।
वासांस्यादाय वस्तूनि चखाद शिशुभिः सह ॥५७॥

गत्वा दूरञ्च गोपालास्तस्थुः सर्वे मुदान्विताः ।
वस्त्राणि पुञ्जीकृत्यादौ ऊचुः स्कन्धेऽतिलोलुपाः ॥५८॥

श्रीदामा च सुदामा च वसुदामा तथैव च । सुबलश्च सुपार्श्वश्च शुभाङ्गः सुन्दरस्तथा
चन्द्रभानुर्वीरभानुः सूर्य्यभानुस्तथैव च । वसुभानू रत्नभानु गोपालाद्वादश स्मृताः ॥
श्रीकृष्णो बलदेवश्च प्रधानाश्च चतुर्दश । गोपा हरेर्वयस्याश्च कोटिशः कोटिशो मुने ॥
वस्त्राण्यादाय ते सर्वे तस्थुरेकत्र दूरतः । शतशः पुञ्जिकास्तत्र स्थापयामासुरुन्मुखाः॥

किञ्चिद्वस्त्रं समादाय कृत्वा च पुञ्जिकां मुदा ।
समारुह्य कदम्बाग्रमुवाच गोपिकां हरिः ॥६३॥

श्रीकृष्ण उवाच ।

भो भो गोपालिकाः सर्वा विनष्टा व्रतकर्मणि ।
कृत्वा विधानं मद्वाक्यं श्रुत्वा क्रीड़त मन्मथात् ॥६४॥

सङ्कल्पिते व्रतार्हे च मासे मङ्गलकर्मणि । यूयं नग्नाः-कथं तोये व्रताङ्गहानिका

परिधेयानि वासांसि पुष्पमाल्यानि यानि च ।

व्रतार्हाणि च वस्तूनि केन नीतानि वोऽधुना ॥६६॥

व्रते तु नग्ना यास्नातितां रुष्टोवरुणःस्वयम् । वरुणानुचरा वासश्चक्रुर्वस्तुवि

कथं यास्यथ नग्नाश्च व्रतस्य किं भविष्यति ।

व्रताराध्या कथं सा च वस्तूनि किं न रक्षति ॥६८॥

चिन्तां कुरुत तां पूज्यां तुष्टाव बलिरीश्वरीम् । युष्माकमीदृशीदेवीनशक्तावस्तु

कथं व्रतफलं सावो दातुं शक्तासुरेश्वरी । फलं प्रदातुं या शक्ता सा शक्ता स

श्रीकृष्णस्य वचः श्रुत्वा चिन्तामापुर्व्रजस्त्रियः । ददृशुर्यमुनातीरं वस्त्रवस्तु

चक्रुर्विषादं तोये च नग्नास्ता रुरुदुर्भृशम् ।

क्व गतानि च वस्त्राणि वस्तूनीत्यूचुरत्र नः ॥७२॥

कृत्वा विषादं तत्रैव तमूचुर्गोपकन्यकाः । पुटाञ्जलियुताः सर्वा भक्त्या विनय

गोपालिका ऊचुः ।

परिधेयानि वस्त्राणि किंकरीणां सदीश्वरः । निबोधयात्मानमेव स्पर्शं कर्तुं

व्रतार्हाणि च वस्तूनि देवस्वानि च साम्प्रतम् । अदत्तानि नोचितानि गृहीतुं

देहि धौतानि धृत्वा च करिष्यामो व्रतं वयम् ।

वस्तुनान्येन गोविन्द वस्तूनां भक्षणं कुरु ॥७६॥

एतस्मिन्नन्तरे तत्र श्रीदामा वस्त्रपुञ्जिकाम् । दर्शयित्वा च ताः सर्वा दूरं

दृष्ट्वा सवस्त्रं गोपालं सर्वासामीश्वरीपरा । सर्वावयस्याश्चोवाच कोपयुक्

श्रीराधिकोवाच ।

हे सुशीले शशिकले हे चन्द्रमुखि माधवि । कदम्बमाले हे कुन्ति यमुने सर्व

हे पद्ममुखि सावित्रि पारिजाते च जाह्नवि । सुधामुखि शुभे पद्मे हे गौरि हे

कालिके कमले दुर्गे हे सरस्वति भारति । अपूर्णे रति हे गङ्गे चाम्बिके स

कृष्णप्रिये मधुमति चम्पे चन्दननन्दिनि । यूयं सर्वाः समुत्थाय बद्ध्वानय

सर्वा राधाज्ञया तूर्णं समुत्थाय जलात् क्रुधा ।
प्रजग्मुर्गोपिका नग्ना योनिमाच्छाद्य पाणिना ॥८३॥
तासां सहचारिण्यो गोप्यस्तूर्णं सहस्रशः। प्रजग्मुस्तेन रूपेण कोपादारक्तलोचनाः॥
...गेन दुद्रुवुः सर्वाः श्रीदामानञ्च बालिकाः । वेगेन च प्रधावन्तं विभ्रन्तं वस्त्रपुञ्जिकाम्
...गामशीघ्रं श्रीदामा यत्र गोपाः सहांशुकाः । जवेन दुद्रुवुर्गोप्यस्तत्पश्चाद्बलसंयुताः॥
वस्त्रचोरांश्च गोपांश्च वेष्टयामासुराशु ताः ।
भिया प्रदुद्रुवुर्बाला यत्र कृष्णः सहांशुकः ॥ ८७ ॥
श्रीकृष्णसहितान् बालान् वेष्टयामासुराशु च ।
गोपिकानां भिया गोपा ददुर्वस्त्राणि माधवम् ॥ ८८ ॥
...धवः स्थापयामास स्कन्धे स्कन्धे तरोस्तथा । कदम्बवृक्षः शुशुभे वस्त्रैर्नानाविधैरपि
वस्त्राणां पुञ्जिकाः सर्वाः स्कन्धेषु विनिधाय च ।
उवाच गोपिकाः कृष्णः परिहासपरं वचः ॥ ९० ॥

श्रीकृष्ण उवाच ।

...मो गोपालिकानग्नाइदानीं किं करिष्यथ । वस्त्रयाच्ञांप्रकर्तुंश्चकुरुताशु पुटाञ्जलिम्
गत्वा वदत युष्माकमीश्वरीमथ राधिकाम् ।
करोतु शीघ्रं वस्त्राणि याच्ञां कृत्वा पुटाञ्जलिम् ॥ ९२ ॥
...यथाहं न दास्यामियुष्मभ्यमंशुकानि च । युष्माकमीश्वरीराधाकिंकरिष्यतिमेऽधुना
व्रताराध्या च या देवी सा वा मे किं करिष्यति ।
इत्येवं कथितं सर्वं ब्रूत यूयञ्च राधिकाम् ॥ ९४ ॥
श्रीकृष्णवचनं श्रुत्वा ताः सर्वा गोपकन्यकाः ।
वीक्ष्य लोचनकोणेन प्रजग्मू राधिकान्तिकम् ॥ ९५ ॥
...र्निवेदनं गत्वा यदुवाच हरिःस्वयम् । श्रुत्वा जहास सा राधा बभूव कामपीड़िता
...वा तासाञ्च वचनं पुलकाञ्चितविग्रहा । न जगाम हरेः स्थानं व्रीड़या सस्मितासती
जले योगासनं कृत्वा दध्यौ कृष्णपदाम्बुजम् ।

ब्रह्मेशानन्तु धर्माणां वन्द्यमीप्सितदं परम् ॥ ९८ ॥

स्मारं स्मारं पदाम्भोजं साश्रुसम्पूर्णलोचना । भावातिरेकात्प्राणेशन्तुष्टाव नि

राधिकोवाच ।

गोलोकनाथ गोपीश मदीश प्राणवल्लभ । हे दीनबन्धो दीनेश सर्वेश्वर नमो

गोपेश गोसमूहेश यशोदानन्दवर्धन । नन्दात्मज सदानन्द नित्यानन्द नमो

शतमन्योर्मन्युमघ्न ब्रह्मदर्पविनाशक । कालीयदमन प्राणनाथ कृष्ण नमोऽस्तु

शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर । ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मबीज नमोऽस्तु

चराचरतरोर्बीज गुणातीत गुणात्मक । गुणबीज गुणाधार गुणीश्वर नमो

अणिमादिकसिद्धीश सिद्धेसिद्धिस्वरूपक । तपस्तपस्विन्तपसां बीजरूप नमो

यदनिर्वचनीयञ्च वस्तुनिर्वचनीयकम् । तत्स्वरूप तयोर्बीज सर्वबीज नमो

अहं सरस्वती लक्ष्मीर्दुर्गा गङ्गा श्रुतिप्रसूः ।

यस्य पादार्चनान्नित्यं पूज्या तस्मै नमो नमः ॥ १०७ ॥

स्पर्शने यस्य भृत्यानां ध्यानेन च दिवानिशम् ।

पवित्राणि च तीर्थानि तस्मै भगवते नमः ॥ १०८ ॥

इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम् ।

मनःप्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती ॥ १०९ ॥

राधाकृतं हरेः स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः। हरिभक्तिञ्च दास्यञ्च लभेद्राधा

विपत्तौ यः पठेद्भक्त्या सद्यः सम्पत्तिमाप्नुयात् । चिरकालगतं द्रव्यं हृतं नष्ट

बन्धुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम् । चिन्ताग्रस्तः पठेद्भक्त्या परां निर्वृ

पतिभेदे पुत्रभेदे मित्रभेदे च सङ्कटे । मासं भक्त्या यदि पठेत्सद्यः स दर्श

भक्त्या कुमारी स्तोत्रञ्च शृणुयाद्वत्सरं यदि ।

श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद् ध्रुवम् ॥ ११४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे राधाकृतं श्रीकृष्णस्तोत्रं

जलस्था राधिका ध्यात्वा श्रीकृष्णचरणाम्बुजम् ।

स्तुत्वैवञ्चक्षुरुन्मील्य दृष्ट्वा कृष्णमयं जगत् ॥ ११५ ॥

...यमुनातीरं वस्त्रद्रव्यमयंमुने । दृष्ट्वा तन्द्राथवा स्वप्नमिति मेने च राधिका ॥११६

...स्थाने यदाधारे यद् द्रव्यं संस्थितं पुरा । वस्त्रैश्च सहितं सर्वं तत्प्रापुर्गोपकन्यकाः

जलादुत्थाय ताः सर्वा व्रतं कृत्वा मनीषितम् ।

संप्राप्य च वरं देव्यस्ताः सर्वाः स्वालयं ययुः ॥ ११८ ॥

नारद उवाच ।

व्रतस्य किं विधानञ्च किं नाम किं फलं प्रभो ।

कानि द्रव्याणि देयानि का देया तत्र दक्षिणा ॥ ११९ ॥

व्रतान्ते किं रहस्यञ्च बभूव सुमनोहरम् ।

व्यासं कृत्वा महाभाग वद नारायणीं कथाम् ॥ १२० ॥

सूत उवाच ।

...दस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः । कथां कथितुमारेभे कवीन्द्राणां गुरोर्गुरुः ॥

नारायण उवाच ।

...व्रतविधानञ्च मत्तो वत्स निशामय । ख्यातं गौरीव्रतं नाम मार्गमासि कृतंस्त्रिया

...ञ्च धर्मकामार्थमोक्षदं कृष्णभक्तिदम् । देशभेदे प्रसिद्धञ्च व्रतं पौर्वापरं स्मृतम् ॥

...दं कामुकानाञ्च फलं कान्तनिमित्तकम् । उपोष्य पूर्वदिवसे वस्त्रं प्रक्षाल्यसंयता

प्रातश्च मार्गसंक्रान्त्यां भक्त्या गत्वा सरित्तटम् ।

धृत्वा धौते च स्नात्वा च नानाद्रव्येण कन्यका ॥ १२५ ॥

...दकञ्च सम्पूज्य कृत्वा चावाहनं घटे । गणेशञ्च दिनेशञ्च वह्निं नारायणं शिवम् ॥

...ं पञ्चोपचारैश्च सम्पूज्य व्रतमारभेत् । घटाधःपिण्डिकांकृत्वाचतुरस्रां सुविस्तृताम्

चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृताम् ॥ १२७ ॥

...य वालुकानाञ्च दुर्गां दशभुजां पराम् । धृत्वा कपाले सिन्दूरं तदधश्चन्दनेन्दुकम्

...ध्यात्वाऽऽवाहयेद्देवीं ततो भूत्वा पुटाञ्जलिः । इमं मन्त्रंपठित्वादौततःपूजांसमारभेत्

हे गौरि शङ्करार्धाङ्गि यथा त्वं शङ्करप्रिया ।

तथा मां कुरु कल्याणि कान्तकान्तां सुदुर्लभाम् ॥ १३० ॥
इमं मन्त्रं पठित्वा तु ध्यायेद्देवीं जगत्प्रसूम् । ध्यानं तत्सामवेदोक्तं निगूढं सर्व
शृणु नारद वक्ष्यामि मुनीन्द्राणाञ्च दुर्लभम् ।
ध्यायन्त्यनेन सिद्धाश्च दुर्गां दुर्गतिनाशिनीम् ॥ १३२ ॥
शिवांशिवप्रियांशैवां शिववक्षःस्थलस्थिताम् । ईषद्धास्यप्रसन्नास्यांसुप्रतिष्ठांसुले
नवयौवनसम्पन्नां रत्नाभरणभूषिताम् । रत्नकङ्कणकेयूररत्ननूपुरभूषिताम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् । मालतीमाल्यसंसक्तकवरीं भ्रमरान्वि
सिन्दूरतिलकं चारु कस्तूरीबिन्दुना सह । वह्निशुद्धांशुकां रत्नकिरीटां सुमनोह
मणीन्द्रसारसंसक्तरत्नमालासमुज्ज्वलाम् ।
पारिजातप्रसूनानां मालाजालानुलम्बिताम् ॥ १३७ ॥
सुपीनकठिनश्रोणीं बिभ्रतीञ्च स्तनानताम् ।
नवयौवनभारौघादीषन्नम्रां मनोहराम् ॥ १३८ ॥
ब्रह्मादिभिस्स्तूयमानां सूर्य्यकोटिसमप्रभाम् । पक्वबिम्बाधरोष्ठीञ्च चारुचम्पकवर्ण
मुक्तापङ्क्तिविनिन्द्यैकदन्तराजिविराजिताम् । मुक्तिकामप्रदां देवीं शरच्चन्द्रमुखीं
ध्यात्वैवं मस्तके पुष्पं विन्यस्य च व्रती मुदा ।
पुष्पं गृहीत्वा भक्त्या च पुनर्ध्यात्वा च पूजयेत् ॥ १४१ ॥
दत्त्वा षोड़शोपचारान् प्रहृष्टं तत्र नित्यशः । पूर्वोक्तेनैव मन्त्रेण मुदा भक्त्या श्र
पूर्वोक्तेनैव स्तोत्रेण स्तुत्वा च प्रणमेत्तदा ।
कृत्वा प्रणामं भक्त्या च संयतः शृणुयात्कथाम् ॥ १४३ ॥

नारद उवाच ।

व्रतं व्रतविधानञ्च फलञ्च स्तोत्रमद्भुतम् ।
अधुना श्रोतुमिच्छामि गौरीव्रतकथां शुभाम् ॥ १४४॥
व्रतं केन कृतं पूर्वं भूमौ केन प्रकाशितम् ।
एतत्सर्वं सुविस्तार्य्य व्रतसन्देहभञ्जन ॥ १४५ ॥

श्रीनारायण उवाच ।

ध्वजस्य हि सुता नाम्ना वेदवती सती । तया कृतं व्रतमिदं महातीर्थे च पुष्करे ॥
माप्तिदिवसे साक्षाद्बभूव जगदम्बिका । योगिनीलक्षसंयुक्ता सूर्य्यकोटिसमप्रभा ॥
त्नकुम्भविनिर्माणरथस्था परमेश्वरी । ईषद्धास्यप्रसन्नास्या तामुवाच सुसंयताम् ॥

पार्वत्युवाच ।

वेदवति भद्रन्ते वरं वृणु यथेप्सितम् । तव व्रतेन तुष्टाहन्तुभ्यं दास्यामि वाञ्छितम्
र्वतीवचनं श्रुत्वा दृष्ट्वा तां हृष्टमानसाम् । पुटाञ्जलियुता साध्वी प्रणम्योवाच नारद॥

वेदवत्युवाच ।

देवि नारायणं कान्तं मह्यं देहि मनीषितम् ।
वरेऽन्यस्मिन् स्पृहा नास्ति दृढ़ां भक्तिञ्च तत्पदे ॥ १५१ ॥

त्वा वेदवतीवाक्यं प्रहस्य जगदम्बिका । अवरुह्य रथात्तूर्णं तामुवाच हरिप्रियाम् ॥

पार्वत्युवाच ।

तं सर्वं जगन्मातस्त्वञ्च लक्ष्मीः स्वयं सती । भारतं पादरजसा पूतं कर्तुं समागता
त्पादरजसा साध्वी सद्यः पूता वसुन्धरा । निखिलानिच तीर्थानि पूतानि परमेश्वरि
न्ते लोकशिक्षार्थं तपश्चर तपस्विनि । नारायणस्य कान्तात्वं प्रिया जन्मनि जन्मनि
रावतरणे विष्णुर्वसुधामागमिष्यति । रामो दाशरथिः पूर्णः कर्तुं दस्युविनिग्रहम् ॥
शापाच्च च्युतयोर्मोक्षणाय च भक्तयोः । अयोध्यायाञ्च त्रेतायामाविर्भावो हरेरपि॥

त्वमेव मिथिलां गच्छ विधाय शिशुविग्रहम् ।
त्वामिमां प्राप्य जनकोऽप्ययोनिसम्भवां सुताम् ॥ १५८ ॥
पालयिष्यति यत्नेन सीता त्वञ्च भविष्यसि ।
गत्वा रामोऽपि मिथिलां त्वां विवाहं करिष्यति ॥ १५९ ॥
नारायणस्य कान्ता त्वं कल्पे कल्पे भविष्यसि ।
इत्युक्त्वा तां समालिङ्ग्य पार्वती स्वालयं ययौ ॥ १६० ॥
गत्वा सा मिथिलां साध्वी शिशुरूपं विधाय च ।

लाङ्गलस्य च रेखायां सुखात्तस्थौ च मायया ॥ १६१ ॥
विलोक्य जनकस्ताञ्चनग्नां मुद्रितलोचनाम् । तप्तकाञ्चनवर्णाञ्च रुदन्तीं तेजसा
दृष्ट्वा ताञ्च गृहीत्वा च कृत्वा वक्षसि नारद । गच्छन्तंप्रतितत्रैववाग् बभूवाशरीरि
अयोनिसम्भवां कन्यां कमलां ग्रहणं कुरु । नारायणस्ते जामाता भवितेत्येवमे
श्रुत्वातदा देववाणीं गृहीत्वा कन्यकामृषिः । गत्वाददौ स्वकान्तायै पालनाय मुद
सा लब्धयौवना प्राप रामं दाशरथिं सती । व्रतस्यास्य प्रभावेण कान्तं त्रिजगतां
प्रकाशितं वशिष्ठेन पृथिव्यां भक्तिभावतः । राधा कृत्वा व्रतमिदं श्रीकृष्णप्राणव
गोपाङ्गनाश्च तं प्रापुर्व्रतस्यास्य प्रभावतः । इत्येवं कथिता विप्र कथा गौरीव्र
भारतेच व्रतमिदं या करोति कुमारिका । स्वामिनं कृष्णतुल्यञ्च सा प्राप्नोति न

इति गौरीव्रतकथा समाप्ता ।

श्रीनारायण उवाच ।

एवं व्रतञ्च चक्रुस्ता यावन्मासञ्च गोपिकाः । पूर्वस्तोत्रेण तां देवीं तुष्टुवुश्च
समाप्तिदिवसे गोप्योव्रतंकृत्वामुदान्विताः । कण्वशाखोक्तस्तोत्रेण तुष्टुवुःपरमे
येन स्तोत्रेणतां स्तुत्वासीता सत्यपरायणा । सद्यःसंप्राप कान्तञ्च रामं राजीवलो

जानक्युवाच ।

शक्तिस्वरूपे सर्वेषां सर्वाधारे गुणाश्रये । सदा शङ्करयुक्ते च पतिं देहि नमोऽस्तु
सृष्टिस्थित्यन्तरूपेण सृष्टिस्थित्यन्तरूपिणि ।
सृष्टिस्थित्यन्तबीजानां बीजरूपे नमोऽस्तु ते ॥ १७४ ॥
हे गौरि पतिमर्मज्ञे पतिव्रतपरायणे । पतिव्रते पतिरते पतिं देहि नमोऽस्तु ते ।
सर्वमङ्गलमाङ्गल्ये सर्वमङ्गलसंयुते । सर्वमङ्गलबीजे च नमस्ते सर्वमङ्गले ।
सर्वप्रिये सर्वबीजे सर्वाशुभविनाशिनि । सर्वेशे सर्वजनके नमस्ते शङ्करप्रिये ।
परमात्मस्वरूपे च नित्यरूपे सनातनि । साकारे च निराकारे सर्वरूपे नमोऽस्
क्षुत्तृष्णेच्छा दया श्रद्धा निद्रा तन्द्रा स्मृतिः क्षमा ।
एतास्तव कलाः सर्वा नारायणि नमोऽस्तु ते ॥१७६ ॥

…ज्जामेधातुष्टिपुष्टिशान्तिसम्पत्तिवृद्धयः । एतास्तव कलाः सर्वाः सर्वरूपे नमोऽस्तु ते

…ष्टादृष्टस्वरूपे च तयोर्बीजफलप्रदे । सर्वानिर्वचनीये च महामाये नमोऽस्तु ते ॥१८१

…वे शङ्करसौभाग्ययुक्ते सौभाग्यदायिनि । हरिकान्तञ्च सौभाग्यं देहि देवि नमोऽस्तु ते

स्तोत्रेणानेन याः स्तुत्वा समाप्तिदिवसे शिवाम् ।
नमन्ति परया भक्त्या ता लभन्ति हरिं पतिम् ॥ १८३ ॥

इह कान्तसुखं भुक्त्वा पतिं प्राप्य परात्परम् ।
दिव्यं स्यन्दनमारुह्य यात्यन्ते कृष्णसन्निधिम् ॥ १८४ ॥

…इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे राधाकृतं पार्वतीस्तोत्रं समाप्तम् ।

समाप्तिदिवसे राधा गोपीभिः सह संयुता ।
देवीं प्रणम्य स्तुत्वा च व्रतं पूर्णञ्चकार ह ॥ १८५ ॥

…सहस्रं ब्राह्मणाय सुवर्णशतकं मुदा । विप्राय दक्षिणां दत्त्वा स्वगृहं गन्तुमुद्यता ॥

…ह्मणानां सहस्रञ्च भोजयामास सादरम् । वाद्यानि वादयामास भिक्षुकाय धनं ददौ

…तस्मिन्नन्तरे तत्र दुर्गा दुर्गतिनाशिनी । आविर्बभूव गगनाज्ज्वलन्ती ब्रह्मतेजसा ॥

…द्धास्यप्रसन्नास्या योगिनीशतसंयुता । सिंहस्था च दशभुजा रत्नालङ्कारभूषिता ॥

…तकुम्भमयाद्दिव्याद्रत्नसारपरिच्छदात् । अवरुह्य रथात्तूर्णमालिङ्ग्योरसि राधिकाम्

दृष्ट्वा गोपाङ्गना देवीं प्रणेमुश्च मुदान्विताः ।
आशिषं युयुजे दुर्गा वाञ्छासिद्धिर्भविष्यति ॥ १९१ ॥

गोपिकाभ्यो वरं दत्त्वा ताः सम्भाष्य च सादरम् ।
उवाच राधिकां दुर्गा स्मेराननसरोरुहा ॥ १९२ ॥

पार्वत्युवाच ।

…धे सर्वेश्वरप्राणादधिके जगदम्बिके । व्रतन्ते लोकशिक्षार्थं मायामानुषरूपिणी ॥

…गोलोकनाथं गोलोकं श्रीशैलं गिरिजातटम् । श्रीरासमण्डलं दिव्यं वृन्दावनमनोहरम्

चरितं रतिचोरस्य स्त्रीणां मानसहारकम् ।
विदुषः कामशास्त्राणां किञ्चित् स्मरसि सुन्दरि ॥ १९५ ॥

श्रीकृष्णार्धाङ्गसम्भूता कृष्णतुल्याच तेजसा । तवांशकलया देव्यःकथं त्वंमानुषी
भवती च हरेः प्राणा भवत्याश्च हरिःस्वयम् । वेदेनास्ति द्वयोर्भेदः कथंत्वं मानुषी
षष्टिवर्षसहस्राणि ब्रह्मा तप्त्वा तपः पुरा । न ते ददर्श पादाब्जं कथं त्वं मानुषी

कृष्णाज्ञया च त्वं देवी गोपीरूपं विधाय च ।
आगतासि महीं शान्ते कथं त्वं मानुषी सती ॥ १९९ ॥

सुयज्ञो हि नृपश्रेष्ठो मनुवंशसमुद्भवः । त्वत्तो जगाम गोलोकं कथं त्वं मानुषी
त्रिःसप्तकृत्वो निर्भूपां चकार पृथिवीं भृगुः । तव मन्त्रेणकवचात्कथं त्वं मानुषी
शङ्करात्प्राप्य त्वन्मन्त्रं सिद्धंकृत्वा च पुष्करे । जघानकार्तवीर्य्यञ्च कथंत्वं मानुषी
बभञ्ज दर्पाद्दन्तञ्च गणेशस्य महात्मनः । त्वत्तो नाम्न भयं चक्रे कथं त्वं मानुषी
मय्युद्धतायां कोपेन भस्मसात्कर्तुमीश्वरः । ररक्षागत्यमत्प्रीत्या कथं त्वं मानुषी

कल्पे कल्पे तव पतिः कृष्णो जन्मनि जन्मनि ।
व्रतं लोकहितार्थाय जगन्मातस्त्वया कृतम् ॥ २०५ ॥

अहो श्रीदामशापेन भारावतरणेन च । भूमौ तवाधिष्ठानञ्च कथं त्वं मानुषी
अयोनिसम्भवा त्वञ्च जन्ममृत्युजरापहा । कलावतीसुता पुण्या कथं त्वं मानुषी
त्रिषु मासेष्वतीतेषु मधुमासे मनोहरे । निर्जने निर्मले रात्रौ सुयोग्ये रासमण्ड
सर्वाभिर्गोपिकाभिश्च सार्धं वृन्दावनेवने । हर्षेण हरिणा सार्धं क्रीड़ा ते भवित
विधात्रा लिखिता क्रीड़ा कल्पे कल्पे महीतले । तव श्रीहरिणा सार्धं केनराधेनि
यथा सौभाग्ययुक्ताहं हरस्य श्रीहरिप्रिये । तथासौभाग्ययुक्तात्वं भव कृष्णस्य

यथा क्षीरेषु धावल्यं यथा वह्नौ च दाहिका ।
भुवि गन्धो जले शैत्यं तथा कृष्णे स्थितिस्तव ॥ २१२ ॥

दैवी वा मानुषीवापिगान्धर्वीराक्षसीतथा । त्वत्तःपरा च सौभाग्या न भूतानभवि
परात्परो गुणातीतो ब्रह्मादीनाञ्च वन्दितः । स्वयं कृष्णस्तवाधीनो मद्वरेण भवि

ब्रह्मानन्तशिवाराध्यो भविता त्वद्वशः सति ।
ध्यानासाध्यो दुराराध्यः सर्वेषामपि योगिनाम् ॥ २१५ ॥

भाग्यवतीराधेस्त्रीजातिषु न ते परा। कृष्णेनसार्द्धंपश्चात् त्वंगोलोकञ्चगमिष्यसि
त्युक्त्वा पार्वती सद्यस्तत्रैवान्तर्दधे मुने। सार्धं गोपालिकाभिश्च राधिका गन्तुमुद्यता
तस्मिन्नन्तरे कृष्णो जगाम राधिकापुरः। राधा ददर्श श्रीकृष्णंकिशोरं श्यामसुन्दरम्
तवस्त्रपरीधानंनानालङ्कारभूषितम्। आजानुमालतीमालावनमालाविभूषितम्॥२१६॥
द्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्। चन्दनोक्षितसर्वाङ्गं शरत्पङ्कजलोचनम्॥२२०॥
रत्पार्वणचन्द्रास्यं सद्रत्नमुकुटोज्ज्वलम्। पक्कदाड़िमवीजाभदशनं सुमनोहरम्॥
नोदमुरलीहस्तन्यस्तलीलासरोरुहम्। कोटिकन्दर्पलावण्यलीलाधाम मनोहरम्॥

गुणातीतं स्तूयमानं ब्रह्मानन्तशिवादिभिः।
ब्रह्मस्वरूपं ब्राह्मण्यं श्रुतिभिश्च निरूपितम्॥ २२३॥

व्यक्तमक्षरं व्यक्तं ज्योतीरूपं सनातनम्। मङ्गल्यं मङ्गलाधारं मङ्गलं मङ्गलप्रदम्॥
ष्ट्वा तदद्भुतं रूपं संभ्रमात् प्रणनाम तम्। तं दृष्ट्वा मूर्च्छिता राधा कामबाणप्रपीड़िता
सं दर्शं मुखाम्भोजं सस्मिता वक्रलोचना। मुखमाच्छादयामास व्रीड़या च पुनः पुनः
था हरिस्तामुवाच प्रसन्नवदनेक्षणः। गोपालिकासमूहानां सर्वेषां पुरतः स्थितः॥

श्रीकृष्ण उवाच।

णाधिकेराधिके त्वंवरंवृणुमनीषितम्। भो भो गोपालिकाःसर्वा वरंवृणुतवाञ्छितम्

कृष्णस्य वचनं श्रुत्वा वरं वव्रे च राधिका।
गोपालिकाश्च प्रहृष्टाः सर्वशः कल्पपादपम्॥ २२६॥

राधिकोवाच।

त्वत्पादाब्जे मन्मनोऽलिः सततं भ्रमतु प्रभो!। पातु भक्तिरसं पद्मे मधुपश्च यथा मधु
वदीयप्राणनाथस्त्वं भव जन्मनि जन्मनि। त्वदीयचरणाम्भोजे देहि भक्तिं सुदुर्लभाम्
व स्मृतौ गुणे चित्तं स्वप्ने ज्ञानेदिवानिशम्। भवेन्निमग्नं सततमेतन्मम मनीषितम्॥

गोपालिका ऊचुः।

थाराधां तथा नश्च प्राणबन्धोदिवानिशम्। भविष्यसिप्राणनाथोरक्ष्यसि प्रतिजन्मनि
नासाञ्च वचनं श्रुत्वा तथास्त्वेवमुवाच ह। प्रसन्नवदनः श्रीमान् यशोदानन्दवर्धनः॥

क्रीड़ापद्मं राधिकायै सहस्रदलसंयुतम् । ललितां मालतीमालां ददौ प्रीत्या ज
मालासमूहं पुष्पाणि गोपीभ्यो गोपिकापतिः ।
प्रहस्य परमप्रीत्या प्रददावित्युवाच ह ॥ २३६ ॥

श्रीकृष्ण उवाच ।

त्रिषु मासेष्वतीतेषु यूयं क्रीड़ां मया सह । रासमण्डलरम्ये च वृन्दारण्ये करि
यथाऽहञ्च तथा यूयं न हि भेदः श्रुतौ श्रुतः ।
प्राणा अहञ्च युष्माकं यूयं प्राणा मम प्रभो ॥ २३८ ॥
व्रतं वो लोकरक्षार्थं न हि स्वार्थमिदं प्रियाः । सहागताश्च गोलोकाद्गमनञ्च मया
गच्छत स्वालयं शीघ्रं वोऽहं जन्मनि जन्मनि ।
प्राणेभ्योऽपि गरीयस्यो यूयं मे नात्र संशयः ॥ २४० ॥
इत्युक्त्वा श्रीहरिस्तत्र तस्थौ सूर्य्यसुतातटे । तस्थुर्गोपालिकाःसर्वा वीक्ष्यकृष्णंपु
सर्वाः प्रहृष्टवदनाः सस्मिता वक्रलोचनाः । प्रीत्या चक्षुश्चकोराभ्यां मुखचन्द्रं
ताः शीघ्रं प्रययुर्गेहं जयं दत्त्वा पुनः पुनः । हरिश्च शिशुभिः सार्धं प्रसन्नः स्वालं
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम् । गोपीनां वस्त्रहरणं सर्वलोकसुखावहम्
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
गोपीकावस्त्रहरणं नाम सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः

### रासक्रीड़ाप्रस्ताववर्णनम् ।

नारद उवाच ।

त्रिषु मासेष्वतीतेषु तासाञ्च हरिणा सह । वद केन प्रकारेण बभूव तनुसङ्गमः
वृन्दावनं किंप्रकारं किंविधं रासमण्डलम् । हरिरेकस्ताश्च बह्वयः केन क्रीड़ा बभू

कुतूहलं भवति मे इदं श्रोतुं नवं नवम् । कथयस्व महाभाग पुण्यश्रवणकीर्त्तन ॥ ३ ॥
कथा पुराणसाराणां रासयात्रा हरेरहो ।
हरिलीलाः पृथिव्यान्तु सर्वाः श्रुतिमनोहराः ॥ ४ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा ऋषिर्नारायणः स्वयम् । प्रहस्य सुप्रसन्नास्यः प्रवक्तुमुपचक्रमे ॥

श्रीनारायण उवाच ।

एकदा श्रीहरिर्नक्तं वनं वृन्दावनं ययौ । शुभे शुक्लत्रयोदश्यां पूर्णे चन्द्रोदये मुने ॥ ६ ॥
यूथिकामालतीकुन्दमाधवीपुष्पवायुना । वासितं कलनादेन मधुभ्राणां मनोहरम् ॥७॥
नवपल्लवसंयुक्तं पुंस्कोकिलरुतश्रुतम् । नवलक्षरासवाससंयुक्तं सुमनोहरम् ॥ ८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमेन सुवासितम् । कर्पूरान्विततताम्बूलभोगद्रव्यसमन्वितम् ॥ ९ ॥
प्रसूनैश्चम्पकानाञ्च कस्तूरीचन्दनान्वितैः ।
रतियोग्यैर्विरचितैर्नानातल्पैः सुशोभितम् ॥ १० ॥
...सं रत्नप्रदीपैश्च धूपेन सुरभीकृतम् । नानापुष्पैश्च रचितं मालाजालैर्विराजितम् ॥११॥
...रितो वर्त्तुलाकारं तत्रैव रासमण्डलम् । चन्दनागुरुकस्तूरीकुङ्कुमेन सुसंस्कृतम् ॥१२॥
...ष्पोद्यानैः पुष्पितैश्च युक्तं क्रीड़ासरोवरैः । हंसकारण्डवाकीर्णैर्जलकुक्कुटकूजितैः ॥
क्रीड़नीयैः सुन्दरैश्च सुरतश्रमहारिभिः । शुद्धस्फटिकसंकाशतोयपूर्णैः सुनिर्मलैः ॥१४॥
दधिपूर्णशुक्लधान्यजलैर्निर्मञ्छनीकृतम् ।
रम्भास्तम्भसमूहेन सुन्दरेण सुशोभितम् ॥ १५ ॥
...आम्रपल्लवयुक्तेन सूत्रबन्धेन चारुणा । भूषितं मङ्गलघटैः सिन्दूरचन्दनान्वितैः ॥ १६ ॥
मालतीमाल्यसंयुक्तैर्नारिकेलफलान्वितैः । स रासमण्डलं दृष्ट्वा जहास मधुसूदनः ॥१७॥
...कार तत्र कुतुकाद्विनोदमुरलीरवम् । गोपीनां कामुकीनाञ्च कामवर्धनकारणम् ॥१८॥
...श्रुत्वा राधिका सद्यो मुमोह मदनातुरा । बभूव स्थाणुवद्देहा ध्यानैकतानमानसा ॥
क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम् ।
उवास सा समुत्तस्थौ समुद्विग्ना पुनः पुनः ॥ २० ॥

त्यक्त्वा चावश्यकं कर्म निःससाराद्भुतं गृहात् । ययौ तदनुसारेण प्रसमीक्ष्य च
ध्यायन्ती चरणाम्भोजं श्रीकृष्णस्य महात्मनः । तेजसा च द्योतयन्ती सद्रत्नसा

बहिर्बभूवुस्तास्त्रस्ता वरेण हृतचेतनाः ।
कुलधर्मं परित्यज्य निःशङ्काः काममोहिताः ॥ २३ ॥
त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः ।
राधिकायाः प्रियतमा गोपीनां प्रवरा ययुः ॥ २४ ॥

तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे । समावेशेन वयसा रूपेण च गु
ययुः सुशीलासङ्गेन सहस्राणि च षोड़श । ययुश्चन्द्रमुखीपश्चात्सहस्राणि च
एकादशसहस्राणि माधव्यालयश्च निर्ययुः । जग्मुः कदम्बमालाल्यः सहस्राणि

ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः ।
चतुर्दशसहस्राणि ययुस्ता यमुनानुगाः ॥ २८ ॥
जाह्नवीसहचारिण्यः सहस्राणि ययुर्नव ।
ययुर्नव सहस्राणि पद्ममुख्याल्य एव च ॥ २९ ॥
साविञ्याल्यः पञ्चदश सहस्राणि ययुर्व्रजात् ।
पारिजातावयस्याश्च सहस्राणि ययुर्दश ॥ ३० ॥
स्वयंप्रभानुगाः सप्त सहस्राणि ययुर्व्रजात् ।
ययुः सुधामुखीगोप्यः सहस्राणि चतुर्दश ॥ ३१ ॥

शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्दश । पद्मानुगा ययुर्गोप्यः सहस्राणि च
गौरी पद्मा ययुर्गोप्यः सहस्राणि चतुर्दश । ययुः सर्वमङ्गलाल्यः सहस्राणि च
कालिकाल्यो ययुर्गोप्यः सहस्राणि च षोड़श । निर्ययुःकमलाल्यश्चसहस्राणि
दुर्गानुगा ययुर्गोप्यः सहस्राणि च षोड़श । ययुः सरस्वतीपश्चात्सहस्राणि
प्रजग्मुर्भारतीपश्चात्सहस्राणि दश व्रजात् । अपर्णासहचारिण्यः सहस्राणि च
रतिपश्चाद्वयस्याश्च सहस्राणि ययुर्दश । गङ्गावयस्याः प्रययुः सहस्राणि चतु

प्रजग्मुरम्बिका पश्चात्सहस्राणि च षोड़श ।

सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश ॥ ३८ ॥

नन्दिनीसहचारिण्यः सहस्राणि ययुर्दश । प्रययुः सुन्दरीपश्चात्सहस्राणि त्रयोदश॥३९

ययुः कृष्णप्रियापश्चात्सहस्राणि च षोड़श । ययुर्मधुमतीपश्चात्सहस्राणि च षोड़श ॥

ययुश्चम्पानुगा गोप्यः सहस्राणि त्रयोदश ।

चन्दनाल्यो ययुः पश्चात्सहस्राणि च षोड़श ॥ ४१ ॥

सर्वा बभूवुरेकत्र तत्र तस्थुः पलं मुदा । तत्राययुर्गोपिकाश्च मालाहस्ताश्च काश्चन ॥४२

...लचन्दनहस्ताश्च काश्चित्तत्रायययुर्व्रजात् । श्वेतचामरहस्ताश्च काश्चित्तत्राययुर्मुदा॥४३

तत्राययुर्गोपकन्याः काश्चित् कुङ्कुमवाहिकाः ॥ ४४ ॥

काश्चित् तत्राययुर्गोप्यस्ताम्बूलपात्रवाहिकाः ।

यावत्काञ्चनवस्त्राणां वाहिका गोपकन्यकाः ॥ ४५ ॥

काश्चित्तत्राययुः शीघ्रं यत्र चन्द्रावली मुदा ।

सर्वाश्चैकत्र संभूय सस्मिताश्च मुदान्विताः ॥ ४६ ॥

...धाय राधिकावेशं स्थानाच्च प्रययुर्मुदा । चक्रुः पुनःपुनस्ताश्च हरिशब्दं जयं पथि ॥

...पुर्वृन्दावनं रम्यं ददृशू रासमण्डलम् । स्वर्गेभ्यः सुन्दरं दृश्यं राकापतिकरान्वितम् ॥

...निर्जनं कुसुमितं वासितं पुष्पवायुना । नारीणां कामजननं मुनिमोहनकारणम् ॥४९

शुश्रुवुस्तत्र ताः सर्वाः पुंस्कोकिलकलध्वनिम् ।

अतिसूक्ष्मकलश्चापि भ्रमराणां मनोहरम् ॥ ५० ॥

...तमधुमत्तानां भ्रमरीसङ्गसङ्गिनाम् । शुभे क्षणे प्रविवेश राधिका रासमण्डलम् ॥५१

सर्वाभिरालिभिः सार्धं ध्यात्वा कृष्णपदाम्बुजम् ।

राधामारात्तु संवीक्ष्य कृष्णस्तत्र मुदान्वितः ॥ ५२ ॥

...गामानुव्रजं प्रीत्या सस्मितोमदनातुरः । मध्यस्थां सखिसङ्घानां रत्नालङ्कारभूषिताम्

...दिव्यवस्त्रपरीधानां सस्मितां वक्रलोचनाम् । गजेन्द्रगामिनीं रम्यांमुनिमानसमोहिनीम्

...नवेशवयसा रूपेणातिमनोहराम् । तलश्रोणिनितम्बानां भारशेषान्वितां पराम् ॥५५

...रुचम्पकवर्णाभां शरच्चन्द्रनिभाननाम् । बिभ्रन्तीं कबरीभारं मालतीमाल्यसंयुताम् ॥

राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम् । नवयौवनसम्पन्नं रत्नाभरणभूषितम्
कन्दर्पकोटिलावण्यलीलाधाममनोहरम् । प्राणाधिकां तां पश्यन्तं पश्यन्तीं वक्र
परमाद्भुतरूपञ्च सर्वत्रानुपमं परम् । विचित्रवेशं चूड़ाञ्च बिभ्रन्तं सस्मितं मुदा ।
वक्रलोचनकोणेन दर्शं दर्शं पुनः पुनः । मुखमाच्छादयामास व्रीड़या सस्मिता
मूर्च्छामवाप सा सद्यःकामबाणप्रपीड़िता । पुलकाञ्चितसर्वाङ्गी बभूव हतचेतना ।

कटाक्षकामबाणैश्च विद्धः क्रीड़ारसोन्मुखः ।
मूर्च्छां प्राप्य न पपात तस्थौ स्थाणुसमो हरिः ॥ ६२ ॥

पपात मुरली तस्य क्रीड़ाकमलमुज्ज्वलम् । द्वितीयं पीतवस्त्रञ्च शिखिपिच्छं श

क्षणेन चेतनां प्राप्य ययौ राधान्तिकं मुदा ।
कृत्वा वक्षसि तां प्रीत्या समाश्लिष्य चुचुम्ब सः ॥ ६४ ॥

श्रीकृष्णस्पर्शमात्रेण संप्राप्य चेतनां सती । प्राणाधिकं प्राणनाथं समाश्लिष्य

मनो जहार राधायाः कृष्णस्तस्य च सा मुने ।
जगाम राधया सार्धं रसिको रतिमन्दिरम् ॥ ६६ ॥

रत्नप्रदीपसंयुक्तं रत्नदर्पणसंयुतम् । चारुचम्पकशय्याभिश्चन्दनाक्ताभा राजितम्

कर्पूरान्विततताम्बूलैर्भोगद्रव्यैः समन्वितम् ।
उवास राधया सार्धं कृष्णस्तत्र मुदान्वितः ॥ ६८ ॥

राधाप्रदत्तताम्बूलं चखाद मधुसूदनः । रासेश्वरी कृष्णदत्तं ताम्बूलं बुभुजे मुदा
दत्तं चर्वितताम्बूलं राधायै प्रभुणा मुदा । चखाद भक्त्या सा तूर्णं प्रहस्य मदन
राधाचर्वितताम्बूलं ययाचे माधवो मुदा । न ददौ राधिका भीता पपात चरणा
एतस्मिन्नन्तरे तत्र सकामः सुरतोन्मुखः । सुष्वाप राधया सार्धं रतितल्पे मनोहे
शृङ्गाराष्टप्रकारञ्च विपरीतादिकं विभुः । नखदन्तकराणाञ्च प्रहारञ्च यथोचितम्
कामशास्त्रेषु यद्गोप्यं चुम्बनाष्टविधं परम् । कामिनीनां मनोहारि चकार रसि
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि स्मरातुरः । चकाराश्लेषणं तत्र कामुकीनां सुख
शृङ्गारकुशलौ तौ तु कामशास्त्रसुपण्डितौ । रतियुद्धविरामश्च न बभूव द्वयोर्

...ं गृहे गृहे रम्ये नानामूर्त्ति विधाय च। रेमे गोपाङ्गनाभिश्च सुरम्ये रासमण्डले॥७७
...पीनां नवलक्षाणि गोपानाञ्च तथैव च। लक्षाण्यष्टादश मुने युक्तानि रासमण्डले॥
मुक्तकेशानि मग्नानि विच्छिन्नभूषणानि च।
वेशोच्छिन्नानि मत्तानि मूर्च्छितानि स्मरेण च॥ ७९॥
...णानां किङ्किणीनां वलयानाञ्च नारद। सद्रत्ननूपुराणाञ्च शब्दयुक्तानि सन्ततम्॥
एवं कृत्वा स्थलक्रीडां ययुस्तानि जलं मुदा।
कृत्वा तत्र जलक्रीडां परिश्रान्तानि साम्प्रतम्॥ ८१॥
...ं जलात्समुत्थाय वासांसि परिधाय च। ददृशुर्मुखपद्मानि सद्रत्नदर्पणेषु च॥८२॥
...न्दनागुरुकस्तूरीद्रव्याणि पुष्पमालिकाः। मुदा परिदधुस्तानि सम्प्रापुश्चेतनानि च॥
...र्पूरञ्च ताम्बूलं भुक्त्वा सर्वाणि कौतुकात्। ददृशुर्मुखपद्मानि सद्रत्ने दर्पणेऽमले॥८४
...चित्कामातुरा कृष्णं बलादाकृष्य कौतुकात्। हस्ताद्वंशीं निजग्राह वसनञ्च चकर्ष ह
काचित्कामप्रमत्ता च नग्नं कृत्वा तु माधवम्।
निजग्राह पीतवस्त्रं परिहास्यं पुनर्ददौ॥ ८६॥
युक्तिं शृण्वित्येवमुक्त्वा काचित्संगृह्य स्वामिनम्।
चुचुम्ब गण्डे बिम्बोष्ठे समाश्लिष्य पुनः पुनः॥ ८७॥
...स्मितं सकटाक्षञ्च मुखचन्द्रं स्तनोन्नतम्। काचिच्छ्रोणिंसुललितां दर्शयामासकामतः
काचित्कान्तं करे कृत्वा संस्थाप्य श्रोणिदेशतः।
चकार चूडानिर्माणं मालतीमाल्यसंयुतम्॥ ८९॥
...चिच्चूडां समाकृष्य मयूरपिच्छकं ददौ। गुञ्जां माल्यञ्च चूडायां वेष्टयामास काचन
...ददौ स्वामिने कामात् प्रेमवर्धनहेतवे। काचित्काञ्चित्समाकृष्य नग्नांकृत्वातु कामतः
...यामास कृष्णस्य क्रोडे चन्दनचर्चिते। ननृतुश्च जगुः काश्चित् कान्तंकृत्वातुकामतः
...नं कारयामास तञ्च काचिद्बलेन च। कृष्णश्च वस्त्रं कस्याश्च विचकर्ष कुतूहलात्
काश्चित् कृत्वा तु नग्नाश्च कस्यैचिदंशुकं ददौ।
कृष्णो राधां समाकृष्य वासयामास वक्षसि॥ ९४॥

तस्याश्च कबरीं रम्यां सुनिर्माणञ्चकार ह । सिन्दूरञ्च ददौ भाले कस्तूरीविन्दु
अतिसूक्ष्मं चन्दनेन्दुं कौतुकात्तदधो ददौ । पत्रावलीं सुललितां सुकपोले चका
वह्निशुद्धांशुकं चारु परिधार्य्यप्रयत्नतः । ददौ सद्रत्नमञ्जीरे गृहीत्वा चरणाम्बुजे ।
नखनिर्माजनं कृत्वा सुन्दरं यावकं ददौ । भूषणैर्भूषितां कृत्वा सम्प्रलिप्यानुलेप
दत्त्वा च मालतीमालां चुचुम्ब च पुनः पुनः । चारुलोचनपद्मे च चकाराञ्जनसं
प्रददौ नासिकामध्ये दुर्लभं गजमौक्तिकम् । श्रोणिदेशे च स्तनयोर्नखच्छिद्रं च
चकार दन्तदलनं पक्वविम्वाधरे वरे । सरसश्च तटे रम्ये पुण्योद्याने सुनिर्जने ॥
वह्निश्चन्द्रोदये रम्ये पुष्पचन्दनचर्चिते । अगुरुचन्दनाक्तेन वायुना सुरभीकृते ॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते । बहुमूर्त्तीः संविधाय योगिनां परमो गुरु
पुनश्चकार भृङ्गारं गोपीनां चित्तहारकः । किङ्किणीनां कङ्कणानां नूपुराणाञ्च
भृङ्गारोद्रेकतस्तत्र बभूव सुन्दरो वरः । मूर्च्छामवापुस्ताः सर्वा नवसङ्गममात्र
बभूवुरचलास्पन्दाः पुलकाञ्चितविग्रहाः । भृङ्गारविरते भूते संप्रापुश्चेतनां पुनः
नखदन्तप्रहारञ्च प्रचकार परस्परम् । कृष्णः कररुहाघातं ददौ तासां कुचोपरि

श्रोणीदेशे सुकठिने नखचित्रं चकार ह ।
नोवीविस्रंसिता तासां कबरी क्षुद्रघण्टिका ॥ १०८ ॥

दूरीभूतं सुवसनं सुवेशं सुमनोहरम् । आलिङ्गनं नवविधं चुम्बनाष्टविधं मुदा ।
भृङ्गारं षोड़शविधं चकार रसिकेश्वरः । अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि च यो

चकारालिङ्गनं प्रीत्या कामुकीनाञ्च कामुकः ।
नारीणां षोड़श कलाः शृङ्गारस्तत्प्रमाणकः ॥ १११ ॥

कलाभेदेन तद्भेदं कामशास्त्रविदो विदुः । प्रकृतं द्वादशविधं चकार रसिकेश्व

निरूपितं कामशास्त्रे चकारेशस्ततोऽधिकम् ।
क्रीड़ारम्भे च मध्ये च विरतौ कर्म योषिताम् ॥११३॥
प्रीत्यर्थमपि कर्त्तव्यं चकारेशस्ततोऽधिकम् ।
गोपीकङ्कणरेखाभिः पादालक्तकचिह्नितः ॥ ११४ ॥

सुमे कृष्णदेहश्च यथाद्रिर्गैरिकेण च । एवम्भूते पूर्णरासंभूते रासमण्डले ॥ ११५ ॥
माजग्मुः सुराःसर्वेसकलत्राश्चसानुगाः । सुवर्णस्यन्दनस्थाश्चकौतुकात्स्वगणावृताः
पुलकाञ्चितसर्वाङ्गाः कामबाणप्रपीड़िताः ।
ऋषयो मुनयश्चैव सिद्धाश्च पितरस्तथा ॥ ११७ ॥
द्याधराश्च गन्धर्वा यक्षराक्षसकिन्नराः । सस्त्रीकाश्च समाजग्मुर्ददृशुश्च मुदान्विताः ॥
दिव्यस्यन्दनमारुह्य शातकुम्भविनिर्मितम् ।
सुशोभितश्च मणिना रत्नसारपरिच्छदम् ॥ ११९ ॥
हिशुद्धांशुकेनैव वेष्टितं सुमनोहरम् । श्वेतचामरयुक्तश्च सद्रत्नदर्पणाम्बुजम् ॥ १२० ॥
तचक्रं चित्रयुक्तं मनोयायिम नोहरम् । सद्रत्नसारनिर्माणकलशोज्ज्वलशेखरम् ॥१२१
समाजगाम भगवान् पार्वत्या सह शङ्करः ।
वामपार्श्वे महाकालो दक्षिणे नन्दिकेश्वरः ॥ १२२ ॥
तः कार्तिकेयश्च स्वयं देवो गणेश्वरः । पिङ्गलाक्षादयः सर्वे पार्षदाः परितस्तयोः ॥
क्षेत्रपालादयः सर्वे तथाष्टौ भैरवेश्वराः ।
वक्षःस्थलस्थिता दुर्गा सस्मिता वक्रलोचना ॥ १२४ ॥
त्या सह ब्रह्मा च शातकुम्भरथस्थितः । वामे सप्तर्षयस्तस्य दक्षिणे सनकादयः ॥
सुवर्णस्यन्दनस्थाश्च धर्मः साक्षी च कर्मणाम् ।
वक्षःस्थलस्थिता तस्य मूर्तिः स्मेरानना सती ॥ १२६ ॥
यन्ती पूर्णरासञ्च सकामा वक्रलोचना । परितः पार्षदाः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥
शच्या सह महेन्द्रश्च रोहिण्या च कलानिधिः ।
स्वाहासार्धं स्वयं वह्निः सूर्य्यश्च संज्ञया सह ॥ १२८ ॥
माजगाम कामश्च रतिं कृत्वाच वक्षसि । सर्वे ग्रहाश्चदिक्पाला आजग्मुःसकलत्रकाः
काशस्थाश्च ददृशुः सरासं रासमण्डलम् । केचिच्च मुमुहुस्तत्र मूर्च्छामापुश्च केचन ॥
हर्षेश्च सुराः सर्वे सस्मिताश्च मुदान्विताः । चन्दनद्रववृष्टिञ्च पुष्पवृष्टिञ्च चिक्षिपुः ॥
स्तूरीयुक्तमाल्यानां वृष्टिञ्चक्रुर्मुनीश्वराः । रासं दृष्ट्वा देवपत्न्यः कामबाणप्रपीड़िताः ॥

स्थले रतिरसं कृत्वा जगाम यमुनाजलम्। राधया सह कृष्णश्च पूर्णब्रह्मसना

गोपीभिः सह जग्मुश्च मायाः श्रीकृष्णरूपिकाः।
प्रपीड़िताः कामबाणैः क्रीड़ाश्चक्रुर्जले मुदा ॥ १३४ ॥
जलं ददौ राधिकायै सकामो माधवः स्वयम्।
ददौ सा च माधवाय कामार्त्तायाञ्जलित्रयम् ॥ १३५ ॥

वस्त्रं जग्राह तस्याश्च साच नग्ना बभूव ह। मालाश्छिच्छेद कवरीं चकार शिथि
सिन्दूरपत्रकं लुप्तं वेशश्च जलताडनैः। भ्रूविचित्रमोष्ठरागं लुप्तं कज्जललोचनम्।
ताश्च नग्नां समाश्लिष्य निममज्ज जलेहरिः। प्रकृत्याभ्यन्तरे क्रीड़ां सुतस्थौ च
ताश्च नग्नां दर्शयित्वा गोपिकां व्रीड़या नताम्। सस्मितां प्रेरयामास दूरतो यमु
सा वेगेन समुत्थाय बलाज्जग्राह माधवम्। गृहीत्वा मुरलीं कोपात् प्रेरयामास
गृहीत्वा पीतवसनञ्चकार तं दिगम्बरम्। वनमालाश्च चिच्छेद ददौ तोयं पुनः
हरिं पुनः समाकृष्य प्रेषयामास पाथसि। गम्भीरे स्रोतसि मुने निममज्ज जगत
उत्थाय माधवः शीघ्रं तां गृहीत्वा प्रहस्य च। कृत्वावक्षसि नग्नाश्च चुचुम्बच पुन
एवन्ता मूर्त्तयः सर्वा गोपीभिः सह कौतुकात्। क्रीड़ां चिचक्रुर्यमुनातीरनीरे मन
तीरं गत्वा तया सार्धं हरिर्नग्नश्च मग्नया। सातं ययाचे वसनं सच तां सस्मितां
राधिकायै ददौ वस्त्रं रम्यां मालाञ्च माधवः। प्रददौ हरये वस्त्रं वंशीं रासेश्वर

चन्दनागुरुकस्तूरीं सर्वाङ्गे कुङ्कुमान्विताम्।
कृष्णस्य परया भक्त्या ददौ श्रोणिस्थितस्य च ॥ १४७ ॥

निर्माय चूड़ां ललितां कामिनीचित्तमोहिनीम्। शोभनैर्मालतील्यैश्चकार वेष्टं
श्रीकृष्णो राधिकायाश्च कवरीं सुमनोहराम्। कृत्वाकुन्तलसंस्कारं निर्ममे पत्र
ददौ ललाटे सिन्दूरं कस्तूरीविन्दुभिः सह। तदधश्चन्दनेन्दुश्च सुसूक्ष्मं सुमनो
नखाङ्कं स्तनयोरूर्वोरुरस्येव घनं मुदा। दत्वातां वासयामास वह्निशुद्धांशुकेन
चन्दनागुरुकस्तूरीकुङ्कुमानां द्रवेण सः। कृत्वा वक्षसि संलिप्य चुचुम्बच पुन
पुनराश्लेषणं कृत्वा ददौ मालां गले पुनः। भूषणैर्भूषितां कृत्वा मञ्जीरश्चरणे द

[अ]लक्तकञ्चरणयोर्नखेषु च ददौ पुनः । एवं गोपश्च गोपीनां विदधौ च पृथक् पृथक् ॥
[ज]नः प्रजग्मुस्ता मत्ताः सुन्दरं रासमण्डलम् । पूर्णेन्दुचन्द्रिकायुक्तं रतियोग्यं सुनिर्जनम्
[मा]धवीकेतकीकुन्दमालतीनां मनोहरैः । चम्पयूथीमल्लिकानां पुष्पैश्च सुरभीकृतम् ॥ १५६
[त]त्र च स्फुटितं पुष्पञ्चयनं कर्त्तुमीश्वरी । गोपीर्नियोजयामास कौतुकेनच राधिका ॥
[का]श्चिन्नियोजयामास मालानिर्माणकर्मणि । काश्चित् ताम्बूलसज्जेषु काश्चिच्चन्दनघर्षणे
[मा]लाचन्दनताम्बूलं गोपीदत्तञ्च सुन्दरी । ददौ कृष्णाय संप्रीत्या सस्मिता वक्रलोचना
[का]श्चिन्नियोजयामासुः कृष्णसङ्गीतकर्मणि । मृदङ्गमुरजादीनां वादनेषु च काश्चन ॥
[ए]वं रासे रतिं कृत्वा लीलया हरिणा सह । विजहार च सर्वत्र निर्जनेषु मनोहरम् ॥
[पु]ष्पोद्यानेषु रम्येषु सरसाञ्च तटेषु च । कन्दरे कुन्दरे रम्ये नदेषु च नदीषु च ॥ १६२ ॥
[न]वीवनिर्जनस्थाने श्मशाने गिरिगह्वरे । वाञ्छितेषुच नारीणां त्रयस्त्रिंशद्वनेषु च ॥ १६३
[भा]ण्डीरे श्रीवने रम्ये कदम्बककानने तथा । तुलसीकानने कुन्दवने चम्पककानने ॥ १६४ ॥
[वृ]न्दारण्ये मधुवने जम्बीरकानने तथा । नारिकेलवने पूगवने च कदलीवने ॥ १६५ ॥
[ब]दरीकानने विल्ववने नारिङ्गकानने । अश्वत्थकानने वंशवने दाड़िमकानने ॥ १६६ ॥
[म]न्दारकानने तालवने चूतवने तथा । केतकीकाननेऽशोकवने खर्जूरकानने ॥ १६७ ॥
[आ]म्रातकवने जम्बूगहने शालकानने । कटकीकानने पद्मवने जातिवने मुने ॥ १६८ ॥
[न्य]ग्रोधगहने घोरे श्रीखण्डकानने तथा । प्रहृष्टकेसरवने सर्वतोऽपि विलक्षणे ॥ १६९ ॥
[ए]वं रेमे कौतुकेन कामार्त्तस्त्रिशद्दिवानिशम् । तथापि मानसम्पूर्णं न च किञ्चिद्बभूव ह ॥
कामिनीनां कामश्च शृङ्गारेण निवर्त्तते । अधिकं वर्द्धते शश्वद्यथाग्निर्घृतधारया ॥ १७१
[स]मुद्देवाः स्वगेहञ्च देव्यश्च मुनयस्तथा । ते सर्वे प्रशशंसुश्च विस्मयञ्च ययुर्मुदा ॥
[गे]हे गेहे नृपेन्द्राणां लेभिरे जन्म भारते । दग्धाः कामाग्निनांशेन देव्यः शृङ्गारलालसाः

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे रासक्रीड़ाप्रस्तावो नाम अष्टाविंशोऽध्यायः ।

———

# ऊनत्रिंशोऽध्यायः

## रासक्रीड़ावर्णनम् ।

श्रीनारायण उवाच ।

अथ गोपाङ्गनाः सर्वाः काममत्ततया मुने । अतिप्रौढ़ाश्च मानिन्यो नेश्वरं मेनिरे
काश्चिदूचुरहो कृष्णं सस्मिता वक्रलोचना । मालतीपुष्पमुत्तोल्य देहि मे मालि

काश्चिदूचुरये कृष्ण स्वक्रोड़ेऽस्मांश्च कुर्विति ।
गृहीत्वा श्रीहरेः स्कन्धमारुरोह च काचन ॥ ३ ॥

उवाच काचिद्दर्पेण प्रमत्ता प्राणवल्लभम् । स्वकीयपीतवसनं परिधारय मामिति ।

उवाच काचिदीशन्तं सिन्दूरं देहि मामिति ।
उवाच काचित् प्राणेशं शीघ्रमागत्य साम्प्रतम् ॥ ५ ॥

कृत्वा कुन्तलसंस्कारं कुरु मे कबरीमिति । काश्चित्संप्रेरयामासुः श्रीखण्डं
स्वाङ्गवेशविधायिन्यो भूषार्थं श्रुतिमूलतः । उवाच काचित् कामेन परं सङ्केत

पश्यन्ती तन्मुखाम्भोजं सस्मिता मैथुनाय च ।
काचिज्जग्राह मुरलीं वलादाकृष्य माधवम् ॥ ८ ॥

जहार पीतवसनं कृत्वा नग्नञ्च कामिनी । कामिन्यः काश्चिदित्यूचुर्मानिन्यो म
अलक्तकद्रवं देहि पादयोर्नखरेषु च । उवाच काचित्प्रेम्णा तं गण्डयोः स्तनयो
नानाचित्रविचित्राढ्यं कुरु पत्रावलीमिति । कृत्वानुमानं मनसा दृष्ट्वा तासां प्र
माधवो राधया सार्द्धमन्तर्धानं चकार ह । अतीवनिर्जने स्थाने मुदा स्वेच्छाम
कलामानप्रकारञ्च शृङ्गारञ्च चकार ह । पर्वते पर्वते रम्ये द्वीपे द्वीपे सुनिर्जने ।
तटे तटे नदीनाञ्च सर्वजन्तुविवर्जिते । श्रीगोष्ठे रत्नशैले च वेलागङ्गातटेऽपि च ।
कालिन्दे च पुलिन्दे च मन्दिरे गन्धमादने । मनोहरे कुन्दवने कावेरीतीरनीरजे
पुष्पभद्रापुलिनजे पुष्पोद्याने सुपुष्पिते । सर्वत्र रमणं कृत्वा राधावेशं विधा

यन्मायया वरं वव्रे दैत्येन्द्रो भक्तिपूर्वकम् । हस्तं दधेच यन्मूर्ध्नि स भस्म भविता

ओमित्युक्त्वा प्रयातन्तं दुद्राव दैत्यपुङ्गवः ।
मृत्युञ्जयो मृत्युभयाद् दुद्राव त्रासविह्वलः ॥ ३२ ॥

पपात डमरुस्तस्य व्याघ्रचर्म मनोहरम् । दिगम्बरो दश दिशो भेजे दानवभीतथे
न हन्ति तञ्च कृपया भक्तञ्च भक्तवत्सलः । दुष्टानुसारं साधुश्च न करोति
साधवोघ्नन्तिघ्नन्तञ्च भृत्यंपुत्रं प्रियांविना । प्रबोधितुं न शक्तश्चस्वात्मानं कृपया
शिवः स्वमृत्युंमत्वा च भीतश्चनिरहङ्कृतः । स्मारं स्मारञ्च मां भद्रेमामेव शरण

दृष्ट्वा स्वाश्रममायान्तं शुष्कण्ठोष्ठतालुकम् ।
हे हरे रक्ष रक्षेति जपन्तं भयविह्वलम् ॥ ३७ ॥

संस्थाप्यतत्समीपे च स दैत्यो बोधितोमया । पृष्टश्च सर्ववृत्तान्तमुवाच मां
तदा ममाज्ञया तूर्णं वञ्चितो माययासुरः । दत्त्वा स्वमूर्ध्नि हस्तञ्च सद्यो भस्म
तदासिद्धाः सुरेन्द्राश्चमुनीन्द्रा मनवोमुदा । तुष्टुवुर्मां सुभक्त्या च लज्जयालज्जित
बभूवः चूर्णस्तद्गर्वो जगाम बोधितो मया । वरं ददाति वरदस्ततो बध्यो
अथ गर्वान्वितो रुद्रो हन्तुं त्रिपुरमुल्वणम् । मत्वा मनस्वि संहर्त्ता सर्वेषां जगतां
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम् । विहाय शूलं मद्दत्तं मदीयकवचं पर
चिरं बभूव समरं वर्षमेकं दिवानिशम् । न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे

पृथिव्याञ्च रणं कृत्वा दैत्येन्द्रो मायया प्रिये ।
अत्यूर्ध्वञ्च समुत्तस्थौ पञ्चाशत्कोटियोजनम् ॥ ४५ ॥

उत्तस्थौ शङ्करस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः । बभूव तत्र युद्धञ्च मासमेकं निराश्रयो
अस्त्राणि चापं चिच्छेद शङ्करस्यासुरो बली । रथं बभञ्ज दैत्येन्द्रश्चापमस्त्राणि
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपतः । वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः
क्षणेन चेतनां प्राप्य कोपाद्दानवपुङ्गवः । शिवं शयानमुत्तोल्य पातयामास भूतले
सरथे पातिते रुद्रे देवा देवर्षयो भिया । तुष्टुवुर्मां परित्राहि कृष्णेत्युक्त्वा पुनः
हरः सस्मार मामेव निर्भयो भयकारणम् । तुष्टाव भक्त्या स्तोत्रेण मया दत्तेन

तदाहं कलया शीघ्रं वृषरूपं विधाय च।
शयानं शङ्करं धृत्वा विषाणाभ्यामुरुक्रमम् ॥ ५२ ॥

[...]दौ तस्मै स्वकवचं स्वशूलमरिमर्दनम्। प्राप्य तद्दानवस्थानमत्यूर्ध्वञ्च निराश्रयम् ॥
[...]या दत्तेन शूलेन जघान त्रिपुरं हरः। मामेव दर्पहन्तारं तुष्टाव व्रीडितः पुनः ॥ ५४ ॥
[...]: पपात दैत्येन्द्रश्चूर्णीभूतश्च भूतले। देवता मुनयः सर्वे तुष्टुवुः शङ्करं मुदा॥५५॥
[...]याज शङ्करो दर्पं विघ्नबीजन्ततो विभुः। ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्वकर्मसु ॥

ततोऽहं वृषरूपेण वहामि तेन तं प्रियम्।
मम प्रियतमो नास्ति त्रैलोक्येषु शिवात्परः ॥ ५७ ॥

[...]ःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः। बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥५८॥
[...]द्यादयःशक्तयो यास्ताःसर्वाः प्रकृतेःकलाः। वागधिष्ठातृदेवी या सा स्वयंचसरस्वती
[...] कल्याणाधिदेवो हर्षरूपो गणेश्वरः। परमार्थः स्वयं धर्मो मम भक्तो हुताशनः ॥
[...]ऐश्वर्य्याधिदेवी मे सर्वगोलोकवासिनः। प्राणाधिष्ठातृदेवीत्वं सदा प्राणाधिकामम

गोपाङ्गनास्तव कला अतएव मम प्रियाः।
मल्लोमकूपजा गोपाः सर्वे गोलोकवासिनः ॥ ६२ ॥

[...]ःस्वरूपः सूर्य्यश्च प्राणा मे वायवःस्मृताः। जलाधिदेवो वरुणः पृथिवीमे मलोद्भवा
[...] शून्यो महाकाशो मदनो मानसोद्भवः। इन्द्रादयः सुराःसर्वे मत्कलांशांशसम्भवाः
[...]ानि सृष्टिबीजानि महदादीनि चैव हि। सर्वेषां बीजरूपोऽहं स्वयमात्मा निराश्रयः
[...]वो मे प्रतिबिम्बश्च कर्मभोगाधिकारकः। अहंसाक्षी निरीहश्च न भोगी सर्वकर्मसु
[...]क्ष्यानार्थदेहोऽयं मम स्वेच्छामयस्य च। प्रकृतिः पुरुषोऽहञ्च एक एव परात्परः
[...]वं कथितंर ाधे शिवदर्पविमोचनम्। सृष्टिबीजञ्च शृणु मे पार्वतीदर्पमोचनम्॥६८॥

श्रीनारायण उवाच।

[...]सुकवन्तं श्रीकृष्णं परमात्मानमीश्वरम्। पप्रच्छ राधिकादेवी निगूढमभिवाञ्छितम्

श्रीराधिकोवाच।

[...]वन् सर्वतत्त्वज्ञ सर्वबीज सनातन। वद मे वाञ्छितं प्रश्नं सर्वसन्देहभञ्जनम् ॥७०॥

सर्वज्ञानाधिदेवश्च शङ्करः सर्वतत्त्ववित् ।
मृत्युञ्जयः कालकालो भगवान् तत्समो महान् ॥ ७१
कथं विभूतिगात्रश्च पञ्चवक्त्रस्त्रिलोचनः । दिगम्बरो जटाधारी नागसङ्घातभू
वृषेणाटति देवेन्द्रो विहाय वरवाहनम् । न बिभर्ति कथं रत्नं सारनिर्माणभूषण
वह्निशुद्धांशुकं त्यक्त्वा धत्ते शार्दूलचर्मकम् । धत्ते धत्तूरकुसुमं पारिजातं विहा
नास्तिरत्नकिरीटेच्छा जटायांप्रीतिरुत्तमा । दिव्यलोकं परित्यज्य श्मशानेषुस्पृहा
चन्दनागुरुकस्तूरीसुगन्धिकुसुमानि च ।
त्यक्त्वा स्पृहा बिल्वपत्रे बिल्वकाष्ठानुलेपने ॥ ७६ ॥
एतद्वेदितुमिच्छामि व्यासेन कथय प्रभो । श्रोतुं कौतूहलं नाथ वर्द्धते मे मन
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । कथां कथितुमारेभे कृत्वा राधां स्ववक्ष

श्रीकृष्ण उवाच ।

युगषष्टिसहस्राणि तपः कृत्वा महेश्वरः । विरराम पूर्णतमो ध्यात्वा मां मनसा
एतस्मिन्नन्तरे माञ्च ददर्श पुरतः स्थितम् । अतीव कमनीयाङ्गं किशोरं श्याम
अहोऽनिर्वचनीयञ्च दृष्ट्वा रूपमनुत्तमम् । न बभूव वितृष्णश्च लोचनाभ्यां त्रिलो
पश्यन्निमेषरहित इति मत्वा स्वमानसे । भक्त्युद्रेकान् महाभक्तो रुरोद प्रेम
सहस्रवदनोऽनन्तो भाग्यवांश्च चतुर्मुखः । बहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मु
पश्यामि किं वा किं स्तौमि संप्राप्य नाथमीदृशम् ।
आस्यैकेन लोचनाभ्यां चतुर्द्धा स पुनः पुनः ॥ ८४ ॥
स्वमानसे कुर्वतीदं शङ्करे च तपस्विनि । तद् बभूव चतुर्वक्त्रं पूर्वेण सह पञ्च
एकैकवक्त्रं शुशुभे लोचनैश्च त्रिभिस्त्रिभिः । बभूव तेन तन्नाम पञ्चवक्त्रस्त्रिलो
स्तवनादधिकप्रीतिः शिवस्य दर्शने मम । तेनाधिकानि तस्यैव बभूवुर्लोचनानि
चक्षूंषि गुणरूपाणि तस्य ब्रह्मस्वरूपिणः । सत्वं रजस्तम इति तस्य हेतुं
सत्वांशेन दृशा शम्भुः पश्यन् पाति च सात्त्विकान् ।
राजसेन राजसिकान् तामसेन च तामसान् ॥ ८६ ॥

चक्षुषस्तामसात् पश्चाल्ललाटस्थाद्धरस्य च ।
संहारकाले संहर्त्तुरग्निराविर्भवेत् क्रुधा ॥ ९० ॥

...कोटितालप्रमाणश्च सूर्य्यकोटिसमप्रभः । लेलिहानो दीर्घशिखस्त्रैलोक्यं दग्धुमीश्वरः
...भूतिगात्रः स विभुः सतीसंस्कारभस्मना । धत्ते तस्या अस्थिमालांप्रेमभावेनभस्मच
...त्मारामो यद्यपीशस्तथापि पूर्णमन्दकम् । सतीशवंगृहीत्वा च भ्रामं भ्रामं रुरोद ह
...यङ्गं चापि तस्याश्च पपात यत्र यत्र ह । सिद्धपीठस्तत्र तत्र बभूव मन्त्रसिद्धिकृत् ॥
...शवावशेषञ्च कृत्वा वक्षसि शङ्करः । पपात मूर्च्छितो भूत्वा सिद्धिक्षेत्रे च राधिके

तदा गत्वा महेशं तं कृत्वा क्रोड़े प्रबोध्य च ।
अददद्दिव्यतत्त्वञ्च तस्मै शोकहरं परम् ॥ ९६ ॥

...शिवश्च सन्तुष्टः स्वं लोकञ्च जगाम ह । मूर्त्यन्तरेण कालेन तांसंप्रापप्रियांसतीम्
...वस्त्रधारी योगेननेच्छानित्येपरैविभोः । जटास्तपस्याकालीनाधत्तेऽद्यापिविवेकतः
...नेच्छा केशसंस्कारे स्वाङ्गवेशेन योगिनः । समता चन्दने पङ्के लोष्ट्रे रत्ने मणीश्वरे
...ड़द्वेषिणो नागाः शङ्करं शरणं ययुः । बिभर्ति कृपया स्वाङ्गे तानेव शरणागतान् ॥
...हनं वृषरूपोऽहमन्यस्तं वोढुमक्षमः । त्रिपुरस्य बधे पूर्णं मत्कलांशसमुद्भवः ॥१०१॥
...रिजातादिकं पुष्पं सुगन्धि चन्दनादिकम् । मयिसंन्यस्यतेष्वेवंप्रीतिर्नास्ति कदाचन
...तूरे तत्सदा प्रीतिर्बिल्वपत्रानुलेपने । गन्धहीने प्रसूने च योगीष्टे व्याघ्रचर्मणि ॥

दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः ।
श्मशानेऽतीव रहसि ध्यायते मामहर्निशम् ॥ १०४ ॥

...ब्रह्मस्तम्बपर्य्यन्तं समञ्च मन्यते शिवः । ममानिर्वचनीयेऽत्र रूपे तन्मग्नमानसम् ॥
...णः पतने नापि शूलपाणेः क्षयो भवेत् । तस्यायुषः प्रमाणञ्चनाहंजानामि का श्रुतिः
...नं मृत्युञ्जयः शूलं धत्ते मत्तेजसा समम् । विना मया न कश्चित्तं शङ्करं जेतुमीश्वरः
...ङ्करः परमात्मा मे प्राणेभ्योऽपि परः शिवः । त्र्यम्बके मन्मनःशश्वन्नप्रियोमेभवात्परः
...ह्माण्डनिकरं छन्नं मया मन्मायया सदा । स कम्पति हरं शश्वन्न च तं मोहितुं क्षमः
...संवसामि गोलोके वैकुण्ठे तव वक्षसि । सदाशिवस्य हृदये निबद्धः प्रेमपाशतः ॥

स्वरसिद्धं सुतानेन पञ्चवक्त्रेण शङ्करः । शश्वद्गायति मद्गाथां तेनाहं तत्समीपतः
स्रष्टुं शक्तोहि नष्टुञ्च भ्रूभङ्गलीलयापि यः । ब्रह्माण्डनिकरंयोगान्नयोगी शङ्कर
दिव्यज्ञानेन यःस्रष्टुं नष्टं भ्रूभङ्गलीलया । मृत्युं कालादिकं शक्तो न ज्ञानी शङ्कर
मम भक्तिञ्च दास्यञ्च मुक्तिञ्च सर्वसम्पदः । सर्वसिद्धिं दातुमीशो न दाता शङ्कर
पञ्चवक्त्रेण मन्नाम यशो गायत्यहर्निशम् । मद्रूपं ध्यायते शश्वन्न भक्तः शङ्कर

अहं सुदर्शनं शम्भुस्तेजसा च वयं समाः ।
ब्रह्मा स्रष्टा च योगेन नास्माभिस्तेजसा समः ॥ ११६ ॥

इत्येवं कथितं सर्वं शङ्करस्य यशोऽमलम् । तथाप्यस्य दर्पभङ्गं किं भूयः श्रोतुमि

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
शङ्करप्रशंसावर्णनं नाम षट्त्रिंशोऽध्यायः ।

---

## सप्तत्रिंशोऽध्यायः

### हरनिर्माल्यशापप्रसंगवर्णनम् ।

राधिकोवाच ।

एवम्भूतस्यच विभोः सर्वेशस्य महात्मनः । न शस्तं कथमुच्छिष्टं ब्रूहि सन्देह

श्रीकृष्ण उवाच ।

श्रृणु देवि प्रवक्ष्येऽहमितिहासं पुरातनम् । पापेन्धनानां दहने ज्वलदग्निशिखो
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह । ददर्श भुक्तवन्तञ्च नाथं नारायणं द्विज

तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा ।
अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः ॥ ४ ॥

प्राप्तमात्रेण तत्रैव भुक्तं तेनैव किञ्चन । किञ्चिद्ररक्ष बन्धूनां भक्षणाय च दुर्लभ
सिद्धाश्रमे च यद्दत्तं गुरवे शूलपाणिने । भक्त्युद्रेकाच्च तत्सर्वं भुक्तञ्च प्राप्तिमा

त्वा सुदुर्लभं वस्तु ननर्त प्रेमविह्वलः। पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रो मुदान्वितः ॥७

गायन्मम गुणान् भक्त्या सुकण्ठःपञ्चवक्त्रतः।

रागभेदैकतानेन तालमानेन सुन्दरम् ॥ ८ ॥

ात डमरुर्हस्तात् शृङ्गञ्च व्याघ्रचर्म च। स्वयं निपत्य पश्चाच्च रुदन् मूर्च्छामवाप ह ॥

ीव कमनीयं तद्रूपं ध्यात्वैकमानसः। सहस्रदलमध्यस्थं मां पश्यन् हृत्सरोरुहे ॥१०

स्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी। मुदाजगाम शीघ्रं तत्सप्रन्नवदनेक्षणा ॥११॥

्तं मूर्च्छितं दृष्ट्वा निपतन्तञ्च भक्तितः। प्रहस्य वार्तां पप्रच्छ कुमारं शूलपाणिनः

ं तां कथयामास कुमारः संपुटाञ्जलिः। श्रुत्वा चुकोपसा देवीशिवं प्रस्फुरिताधरा

शप्तुमुद्यतां देवीमुत्थाय च त्रिलोचनः। बोधयामास विविधं तुष्टाव संपुटाञ्जलिः।

ला मनोहरं स्तोत्रं न शशाप शिवं शिवा। दुष्टं चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि

लोकानां प्रभावश्च तपःसौभाग्यतेजसाम्। ब्रह्माण्डे सर्वसंहर्ता चकम्पे पार्वतीभये॥

ाच तं जगन्माता नीतिसारं परं वचः। गणप्रसूः सकोपा च रक्तपङ्कजलोचना ॥१७

ो तपःप्रभावश्च तेजसश्च न जीविनाम्। स ब्रह्माण्डस्य संहर्ता चकम्पे शैलकन्यका

पार्वत्युवाच।

ं पोष्टा जगतां पाता ममैव च विशेषतः। वक्ता चतुर्णां वेदानां जनकश्च स्वयंविभुः

मुक्तिप्रदाता भक्तानां दाता च सर्वसम्पदाम्।

त्वं चेत्करोषि दुर्नीतिं को वा धर्मञ्च पाति वै ॥ २० ॥

ा ते परिपाल्याहं पोष्या भक्ता च किङ्करी। वञ्चिता कर्मदोषेण हरनिर्माल्यभक्षणे॥

किञ्चिच्छुद्धं हिरण्येन किञ्चिद्वस्तु च वायुना।

किञ्चित् प्रक्षालनेनैव सर्वं विष्णोर्निवेदनात् ॥ २२ ॥

ष्णोर्निवेद्रितान्नेन यष्टव्याः सर्वदेवताः। पितरोऽतिथयश्चैवमिति वेदेषु निश्चितम् ॥

निवेद्यमभक्ष्यञ्च नैवेद्यमुदरे हरेः। त्यक्त्वा करोति यो भक्त्या पार्षदप्रवरो भवेत् ॥

ृतं सर्ववस्तूनां मिष्टसारं सुदुर्लभम्। विष्णोर्निवेदितान्नस्य कलां नार्हतिषोड़शीम्

त्यकालिकमृत्युं तदमृतं मूढरञ्जनम्। नैवेद्यञ्च हरेरेव हरितुल्यं करोत्यहो ॥ २६ ॥

यदृच्छया तन्नैवेद्यं यो भुङ्क्त साधुसङ्कतः । षष्टिवर्षसहस्राणां प्राप्नोति तपसः

यो निवेद्य हरिं भुङ्क्ते भक्त्या भक्तश्च नित्यशः ।

किंवा तपस्यां कर्ता च स हरेस्तेजसा समः ॥ २८ ॥

श्रुतं पुरा त्वन्मुखतः पुष्करे मुनिसंसदि । अहं वेदविधाता न किमहं वक्तुमि

सुचिरञ्च तपस्तप्त्वामया लब्धस्त्वमीश्वरः । त्वया विष्णोःप्रसादेनवञ्चिताहं क

यतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाधुना ।

अतो मत्तो गृहाणैतत् फलमेव महेश्वर ॥ ३१ ॥

अद्य प्रभृति ये लोका नैवेद्यं भुञ्जते तव । ते जन्मैकं सारमेया भविष्यन्त्येव

इत्युक्त्वा पार्वती माता रुरोद पुरतो विभोः । दृष्टिःपपात तत्कण्ठे नीलकण्ठो

तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम् ।

तन्मानभङ्गं स्तोत्रेण विनयेन चकार ह ॥ ३४ ॥

करेण चक्षुषो नीरं संमृज्य च पुनः पुनः । बोधयामास विविधैर्नीतिवाक्यैर्मनो

परितुष्टा च सा देवी भर्तारं समुवाच ह । कलेवरञ्च त्यक्ष्यामि नैवेद्येन विना ह

बिभर्ति देहं सततं तव सौभाग्यवर्द्धनम् । कथं वहामि सौभाग्यरहितञ्च कलेवर

अपूर्वं तव नैवेद्यं जन्ममृत्युजराहरम् । कृत दुष्टञ्च यत्तस्मात् पश्य देहं त्यजामि

लिङ्गोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर । सुपवित्रं भवेत्तच्च विष्णोर्नैवेद्य मिश्रित

इत्येवमुक्त्वा सा देवी देहं त्यक्तुं समुद्यता । त्रस्तो हरस्तत्पुरतः स्तुत्वाच स्वीक

शङ्कर उवाच ।

स्थिरा भव महादेवि चण्डिके जगदम्बिके । ममापराधमखिलं क्षन्तुमर्हसि सु

मां भृत्यं तपसा क्रीतं कृपां कुरु ममोपरि । ब्रह्मविष्णुमहेशानां बीजभूते सना

अहो गोलोकनाथस्य गुणातीतस्य निर्गुणे । सर्वशक्तिस्वरूपे च सदैव सहवा

साकारे च निराकारे नित्ये स्वेच्छामये प्रिये ।

कृपया तद्विभोरेव मम वक्षसि साम्प्रतम् ॥ ४४ ॥

सर्वबीजस्वरूपे च महामायि मनोहरे । सर्वसिद्धिप्रदे देवि मुक्तिदे कृष्णभक्तिदे

...त्येवं श्रीहरेः साक्षान्नाहं दातुमपि क्षमः। तदा देहं परित्यज्य निर्गुणं व्रज निर्गुणे ॥
...त्येवमुक्त्वा पुरतस्तस्थौ च चन्द्रशेखरः। बभूव सुप्रसन्ना सा प्रणनाम हरं परम् ॥४७॥
...त्येवं पार्वतीस्तोत्रं शङ्करेण कृतं पुरा। यः पठेद्विपदा ग्रस्तः स भयादेव मुच्यते ॥४८
...भेदो भवेद्दूरं तत्सम्प्रीतिर्भवेत् पुरा। पार्वती परितुष्टा च नात्यजत्तस्य मन्दिरम्

इति श्रीब्रह्मवैवर्त्ते पार्वतीस्तोत्रं समाप्तम्।

श्रीकृष्ण उवाच।

...त्वा प्रतिज्ञां नाथस्य परितुष्टा बभूव सा। जगाम स्वर्णदीन्तूर्णं स्नानार्थं शङ्कराज्ञया ॥

स्नात्वा सम्पूज्य भक्त्या च सुरमिष्टञ्च निर्गुणम्।
चकार प्रस्तुतं शीघ्रं मिष्टान्नं व्यञ्जनानि च ॥ ५१ ॥
शिवः स्नात्वा च सम्पूज्य ब्रह्मज्योतिः सनातनम्।
तुष्टाव परया भक्त्या मामेव हृदयस्थितम् ॥ ५२ ॥

...त्वा सर्वमहं भुक्त्वा तस्मै दत्त्वाभिवाञ्छितम्। नैवेद्यं पार्वती लेभे तवमूलं समागता
...वावशेषं सा देवी सह भर्त्रा मुदान्विता। तुष्टाव शङ्करं भक्त्या प्रणनाम मुहुर्मुहुः ॥
...वं कथितं सर्वं त्वया पृष्टं सुरेश्वरि। अभिशप्तं शङ्करस्य निर्माल्यं येन हेतुना ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे हरनिर्माल्यशापप्रसङ्गो नाम सप्तत्रिंशोऽध्यायः।

---

# अष्टत्रिंशोऽध्यायः

## दुर्गादर्पविमोचनम्।

श्रीकृष्ण उवाच।

...सङ्गः श्रुतो देवि शङ्करस्य जगद्गुरोः। अधुना श्रूयतां मत्तो दुर्गादर्पविमोचनम् ॥१
...सा सर्वदेवानामाविर्भूय जगत्प्रसूः। दधार कामिनीरूपं कमनीयं मनोहरम् ॥ २ ॥

निहत्य दानवेन्द्रांश्च ररक्ष देवताकुलम् । लेभे जन्म ततो देवी जठरे दक्षयोषितः ।
पिनाकपाणिं जग्राह सा देवी सुरसाधनम् ।
शश्वत् परमभक्त्या च सिषेवे स्वामिनं सती ॥ ४ ॥
दक्षेण सार्द्धं दैवेन बभूव शिवशत्रुता । निरर्थकं दैवयोगात् पुरा वै सुरसंसदि ।
दक्षश्चकार यज्ञञ्च तत आगत्य कोपतः । सर्वान् विज्ञापयामास तत्रैव शङ्करं वि
सस्त्रीका देवताः सर्वा आजग्मुर्दक्षमन्दिरम् । सगणः शङ्करः कोपान्नाजगामाभि
सती पतिञ्च मोहेन बोधयामास यत्नतः । न तञ्चालयिन्तुं शक्ता बभूव चञ्चला
आजगाम पितुर्गेहं दर्पात्तस्व विनाशया । तस्य शापेन तस्याश्च दर्पभङ्गो बभूव ह
न हि सम्भाषणञ्चक्रे वाङ्मात्रेण पिता च ताम् ।
श्रुत्वा च निन्दां भर्तुश्च देहं तत्याज मानतः ॥ १० ॥
एवं प्रिये निगदितं सतीदर्पविमोचनम् । तस्य जन्मान्तरं नित्यं दर्पभङ्गश्च श्रूयताम् ।
लेभे जन्म सतीशीघ्रं जठरे शैलयोषितः । शिवस्तस्याश्चिताभस्म चास्थि जग्राह
चकार मालास्थ्नाञ्चभस्मना तनुलेपनम् । स्मारंस्मारं सतीं प्रेम्णा भ्रामं भ्रामं पु
सुषाव मेना तां देवीमतीव सुमनोहराम् । सृष्टौ विधातुस्तस्याश्च ह्युपमा नास्ति
गुणप्रसूर्गुणान् सर्वान् सर्वरूपान् विभर्त्ति सा ।
सर्वाश्च देपपत्न्यस्तत्कलां नार्हन्ति षोड़शीम् ॥ १५ ॥
बभूव वर्द्धमाना सा शुक्ले चन्द्रकला यथा । अतीव यौवनस्था च शैलगेहे दिने
बभूवाकाशवाणी च तां सम्बोध्य जगत्प्रसूम् । शिवे शिवश्च तपसा कठोरेण
विनेश्वरं न तपसा प्राप्ता हि गर्भसम्भवम् । प्रहस्य तस्थौ श्रुत्वेति सा च यौवन
मम जन्मान्तरीणञ्च भस्मास्थि च बिभर्ति यः ।
स मां प्रौढ़ां कथं दृष्ट्वा न गृह्णात्यत्र जन्मनि ॥ १६ ॥
यो विदग्धश्च ब्रह्माण्डं बभ्राम मम शोकतः । स कथं मां न गृह्णाति दृष्ट्वा परम
दक्षयज्ञं यो बभञ्ज मम हेतोःकृपानिधिः । स कथं मां न गृह्णातिपत्नीं जन्मनि
यायस्यपत्नी यो यस्या भर्ताप्राक्तनतःपुरा । कुतोविश्वे तयोर्भेदो निषेकोनाद्य

स्वरूपगुणाधारं मत्वा स्वमतिमानतः । न चकार तपः साध्वी न विज्ञाय तमीश्वरम् ॥
सुन्दरीषु च सर्वासु मत्तो नास्त्येव सुन्दरी । हृदीति मत्वा गर्वेण न चकार तपःशिवा
रूपयौवनवेशानां पुमान् ग्राही स्वयोषिताम् ।
शिवो मत्कृतिमात्रेण मां गृह्णाति विना तपः ॥ २५ ॥
इतिमत्वा गिरिजा तस्थौ हिमगिरेर्गृहे । शश्वत्सहचरीमध्ये क्रीडोन्मत्ताद्दिवानिशम्
एतस्मिन्नन्तरे तूर्णं दूतः शैलेन्द्रसंसदि । उवाचागत्य मधुरं तत्पुरः संपुटाञ्जलिः ॥
दूत उवाच ।
उत्तिष्ठोत्तिष्ठ शैलेन्द्र गच्छाक्षयवटान्तिकम् । आजगाम महादेवः सगणो वृषवाहनः ॥
मधुपर्कादिकं दत्त्वा भक्तिनम्रात्मकन्धरः । पूजनं कुरु शैलेन्द्र देवेन्द्रन्तमतीन्द्रियम् ॥
सिद्धिस्वरूपं सिद्धेशं योगीन्द्राणां गुरोर्गुरुम् ।
मृत्युञ्जयं कालकालं ब्रह्मज्योतिः सनातनम् ॥ ३० ॥
आत्मस्वरूपञ्च सगुणं निर्गुणं विभुम् । भक्तध्यानार्थममलं दधानं देहमीश्वरम्॥३१॥
श्री दूतवचःश्रुत्वा समुत्तस्थौ मुदान्वितः । मधुपर्कादिकं नीत्वाजगाम शङ्करान्तिकम्
श्री दूतवचः श्रुत्वा प्रसन्नवदनेक्षणा । हृदीति मेने मद्धेतोराजगाम महेश्वरः ॥ ३३ ॥
कार वेशमतुलं दधार वस्त्रमुत्तमम् । रत्नेन्द्रसारालङ्कारान् रत्नमालां मनोहराम्॥३४॥
पारिजातप्रसूनानां मालां चन्दनसंयुताम् । चकार शङ्करार्थञ्च मत्वा मालां मनोहराम्
रत्नसिंहासनस्था सा ददर्श दर्पणे मुखम् । कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुभूषितम्
उज्ज्वलनेत्रयुगलं निर्मलाञ्जनसंयुतम् । शरन्मध्याह्नममलं यथा लिप्तं त्रिवेष्टितम् ॥ ३७ ॥
सुकोमलौष्ठयुगलं ताम्बूलरागसंयुतम् ।
अतीव सुन्दरं रम्यं पक्वविम्बफलं यथा ॥ ३८ ॥
कुण्डलदीप्त्या च गण्डस्थलविराजितम् । सूर्योदयेन ज्वलितं सुमेरुशिखरं यथा ॥
अत्यनिर्वचनीयञ्च दन्तपंक्तिमनोहरम् । यथा मुक्तासमूहञ्च सजलं जलदागमे ॥ ४० ॥
गजमुक्तासमायुक्तं सुचारुनासिकोत्तमम् । सुशोभितं यथा मेरुं स्वर्णदीजलधारया ॥
मालतीमाल्यसंयुक्तकबरीभारसंयुतम् । बकपंक्तिसुशोभाढ्यं नवीनं जलदं यथा ॥४२॥

तप्तकाञ्चनवर्णाभं चारुवक्षःस्थलोज्ज्वलम् ।
रत्नेन्द्रसारहारात्कं कस्तूरीकुङ्कुमान्वितम् ॥ ४३ ॥

चारुचम्पकवर्णाभं स्तनयुग्मं मनोहरम् । बदरीफलतुल्यञ्च चारुपत्रकशोभितम्
मध्यं मनोहरं क्षीणं निम्ननाभिस्थलोज्ज्वलम् । अतीव सुन्दरं रम्यं सुन्दरं

रम्भास्तम्भविनिन्द्यैकमूरुयुग्मं मनोहरम् ।
कामालयं सुकठिनं निगूढमंशुकेन च ॥ ४६ ॥

स्थलपद्मप्रभाजुष्टपदयुग्मं मनोहरम् । रत्नपाशकसंयुक्तं सिद्धालक्तकभूषितम् ।
दधतं रत्नमञ्जीरं राजहंसानुकारि च । रत्नेन्द्रसाराभरणं निर्मितं विश्वकर्मणा ।
करं सुकोमलतरं सुन्दरं कनकप्रभम् । रत्नकङ्कणकेयूरशङ्खभूषणभूषितम् ॥ ४९ ॥
बिभ्रत्सद्रत्नमुकुरं लीलाकमलमुज्ज्वलम् । रत्नाङ्गुलीयमतुलं दधत्तत्सुमनोहरम् ।
दृष्ट्वा स्वरूपमतुलं दध्यौ शङ्करमीश्वरम् । विशिष्य मनसा शश्वद्भक्तुंश्चरणपङ्कजम्

पितरं मातरं बन्धुं साध्वीवर्गं सहोदरम् ।
अन्तरे सा न सस्मार किञ्चिदेव शिवं विना ॥ ५२ ॥

अथ शैलेश्वरस्तत्र ददर्श चन्द्रशेखरम् । स्वर्णदीपुलिनाद्रम्यादुत्पतन्तञ्च स
दधतं संस्कृतां मालां जपतं मम नामकम् । तप्तस्वर्णप्रभाजुष्टजटाराशिविरा
वृषभस्थं शूलपाणिं सर्वभूषणराजितम् । नागयज्ञोपवीतञ्च सर्पभूषणभूषितम् ।

शुद्धस्फटिकसङ्काशं व्याघ्रचर्म्मधरं परम् ।
विभूतिभूषिताङ्गन्तमस्थिमालं दिगम्बरम् ॥ ५६ ॥

पञ्चवक्त्रं त्रिनयनं सूर्य्यकोटिसमप्रभम् । ददर्श रुद्रान् परितोज्वलतो ब्रह्मतेजसा

शिवं वामे महाकालं दक्षिणे नन्दिकेश्वरम् ।
भूतप्रेतपिशाचांश्च कुष्माण्डान् ब्रह्मराक्षसान् ॥ ५८ ॥

वेतालान् क्षेत्रपालांश्च भैरवान् भीमविक्रमान् । सनकञ्च सनन्दञ्च कुमारञ्च स
जैगीषव्यं देवलञ्च काणादञ्चौतमं तथा । पिप्पलादं कणखनं वोढुं पञ्चशिखं
जावालिं करथं कण्वं लोमशं सूर्य्यवर्चसम् । कात्यायनं पाणिनिञ्च शङ्खं दुर्वा

[...]तातपं पारिभद्रमष्टावक्रं मरुद्भवम् । एतान् पुरोगमान्नत्वा प्रणनाम शिवं गिरिः ।
मूर्ध्ना निपत्य भूमौ स दण्डवत्संपुटाञ्जलिः ॥ ६२ ॥
[...]योऽनल्पया भक्त्या धृत्वा तच्चरणाम्बुजम् । ननाम चाश्रुनेत्रः स पुलकाञ्चितविग्रहः
[...]र्वदत्तेनः स्तोत्रेण तुष्टाव परमेश्वरम् । तुष्टे ब्राह्मे दिनेऽतीते पुष्करे सूर्य्यपर्वणि ॥ ६४॥

हिमालय उवाच ।

त्वं ब्रह्मा सृष्टिकर्त्ता च त्वं विष्णुः परिपालकः ।
त्वं शिवः शिवदोऽनन्तः सर्वसंहारकारकः ॥ ६५ ॥

[...]मीश्वरो गुणातीतो ज्योतीरूपः सनातनः । प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥
[...]नारूपविधाता त्वं भक्तानां ध्यानहेतवे । येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥
[...]र्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् । सोमस्त्वंशस्यपाता च सततंशीतरश्मिना
[...]युस्त्वं वरुणस्त्वञ्च त्वमग्निः सर्वदाहकः । इन्द्रस्त्वं देवराजश्च काले मृत्युर्यमस्तथा
[...]त्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः । वेदस्त्वं वेदकर्त्ता च वेदवेदाङ्गपारगः

विदुषां जनकस्त्वञ्च विद्वांश्च विदुषां गुरुः ।
मन्त्रस्त्वं हि जपस्त्वं हि तपस्त्वं तत्फलप्रदः ॥ ७१ ॥
वाक् त्वं वागधिदेवी त्वं तत्कर्त्ता तद्गुरुः स्वयम् ।
अहो सरस्वतीबीजं कस्त्वां स्तोतुमिहेश्वरः ॥ ७२ ॥

[...]येवमुक्त्वाशैलेन्द्रस्तस्थौ धृत्वापदाम्बुजम् । तत्रोवास तमाबोध्य चावरुह्यवृषाच्छिवः
[...]तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नरः । मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे ॥
[...]पुत्रो लभते पुत्रं मासमेकं पठेद्यदि । भार्य्याहीनो लभेद्भार्य्यां सुशीलां सुमनोहराम्
[...]रकालगतं वस्तु लभते सहसा ध्रुवम् । राज्यभ्रष्टो लभेद्राज्यं शङ्करस्य प्रसादतः ॥
[...]रागारे श्मशाने च शत्रु ग्रस्तेऽतिसङ्कटे । गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ॥
[...]णमध्ये महाभीते हिंस्रजन्तुसमन्विते । सर्वतो मुच्यते स्तुत्वा शङ्करस्य प्रसादतः ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
दुर्गादर्पविमोचनं नामाष्टत्रिंशत्तमोऽध्यायः ।

# एकोनचत्वारिंशोऽध्यायः

## मेनकया पूर्वशिवरूपदर्शनम्

श्रीकृष्ण उवाच ।

इति स्तुत्वा हिमगिरिर्वसतः शङ्करस्य च । उवास पुरतो दूरे लब्धाज्ञः सर्वसम्
मधुपर्कादिकं तस्मै प्रददौ भक्तिपूर्वकम् । मुनीन् सम्पूजयामास ततः शङ्करपार्श्व
तदा तत्र समागत्य मेनका स्त्रीगणैः सह । ददर्श वटमूलस्थं शङ्करं चन्द्रशेखरम् ।
ईषद्धास्यप्रसन्नास्यं वसन्तं व्याघ्रचर्मणि । मध्ये मुनिगणानाञ्च ज्वलन्तं ब्रह्मतेजसा

यथाकाशे तारकाणां द्विजराजं विराजितम् ।
परमाह्लादकं रूपं कन्दर्पकोटिसन्निभम् ॥ ५ ॥

विहाय वार्द्धकावस्थां दधतं नवयौवनम् । अतीव सुन्दरं रम्यं चित्तचौरञ्च योषितां
कामंकामातुराणाञ्च सतीनाञ्च सुतंयथा । वैष्णवानां महाविष्णुं शैवानाञ्चसदाशिवं
शक्तिस्वरूपं शाक्तानां सौराणांसूर्य्यरूपिणम् । कालस्वरूपंदुष्टानां शिष्टानांपरिपालकम्
कालकालसमं मृत्योर्मृत्युं मृत्युंभयानकम् । व्याघ्रचर्म चारुवस्त्रं बभूव भस्मचन्दनम्
सर्पाः सुन्दरमाल्यानि कस्तूरी या विषप्रभा । जटा सुललिता चूड़ा चन्द्रमेलककलया

सुचार्वी मालतीमाला गङ्गाधारा मनोहरा ।
अस्थिमाला रत्नमाला धत्तूरं चारु चम्पकम् ॥ ११ ॥

एकीभूतं पञ्चवक्त्रं नेत्रयुग्माब्जशोभितम् । शरत्पार्वणचन्द्राभं प्रच्छाद्य दीप्तमुखम्
बन्धुजीवविनिन्द्यैकमोष्ठाधरमनोहरम् । श्वेतश्चन्द्रो वृषेन्द्रश्च भूताद्या नर्तका इव ।
सद्यो व्यतिक्रमं सर्वं महेशस्य महेश्वरी । दृष्ट्वैवं शिवरूपञ्च; मेना तुष्टा बभूव ह ।
काश्चिन्निमेषरहिताः कामेनपुलकाञ्चिताः । अतिकामातुराः सत्यः प्रापुर्मूर्च्छाञ्च

काश्चिद्विनिन्द्य कान्तांश्च प्रशशंसुर्महेश्वरम् ।
मनोरथेन मनसा समाश्लिष्यन्ति काश्चन ॥ १६ ॥

काश्चिन्मानसिकं कामात् कुर्वन्ति चुम्बनं मुदा।
ध्रुवं कामं करिष्यामो वयञ्च कामसागरे ॥ १७ ॥

[...]स्माकमेवं भर्त्ता च परत्रैव यतो भवेत्। इहैवैकं करिष्यामो वयं कान्तं रतौ रतम्॥
[...]तपस्या सुचिरमितिजल्पन्तिकाश्चन। काश्चिद्दृष्ट्वा शिवं किञ्चिन्मुखमाच्छाद्यवाससा

सस्मिता वक्रनयनाः पश्यन्त्येवं पुनः पुनः।
वयं गृहं न यास्यामो यास्यामः शिवसन्निधिम् ॥ २० ॥

[...]त्सुधांशुवदनं द्रक्ष्यामोऽहर्निशं मुदा। संसारं न करिष्यामः प्रविशामो हुताशनम्

भविता नः शिवः स्वामीत्येवं जल्पन्ति काश्चन।
अहो पुण्यवती दुर्गा श्लाघ्यते जन्म भारते ॥ २२ ॥

[...]स्या ह्ययं शिवः स्वामीत्येवं जल्पन्तिकाश्चन। मुदामेना शिवं दृष्ट्वा गृहन्ताभिर्जगामह
[...]वं सम्पूज्य शैलेन्द्रः प्रणम्य स्वगृहं ययौ। कृत्वानुमानं रहसि गिरीशो मेनया सह
[...]ांप्रस्थापयामास शिवायशिवसन्निधिम्। पार्वतीसखिभिः सार्द्धंवेशं कृत्वामनोहरम्
[...]वातुरक्ता हर्षेण जगाम शिवसन्निधिम्। दृष्ट्वा शिवा शिवं शान्तं प्रसन्नवदनेक्षणम्
[...]प्रदक्षिणं कृत्वा सस्मिता प्रणनाम सा। अनन्यभाजं गुणिनममरं ज्ञानिनां वरम्॥

सुन्दरं लभ भर्तारं सुन्दरीत्याशिषं ददौ।
भविता तव सौभाग्यं शुभे स्वामिनि सन्ततम् ॥ २८ ॥

[...]स्ते भविता साध्वि नारायणसमोगुणैः। भविता ते परा पूजा त्रैलोक्येजगदम्बिके
[...]ाण्डेषु च सर्वेषु सर्वेषाञ्च परा भव। सप्तप्रदक्षिणीकृत्य यतो भक्त्या त्वया नतम्
[...]प्तजन्मनि तुष्टोऽहं तत्फलं लभ सुन्दरि। तीर्थे कान्तेऽभीष्टदेवे गुरोर्मन्त्रे तथौषधे

आस्था च यादृशी यासां सिद्धिस्तासाञ्च तादृशी।
इत्युक्त्वा शङ्करस्तूर्णं ब्रह्मज्योतिः परञ्च माम् ॥ ३२ ॥
दध्यौ योगासनं कृत्वा योगीशो व्याघ्रचर्मणि।
प्रक्षाल्य चरणौ देवी पपौ तच्चरणोदकम् ॥ ३३ ॥

[...]कार मार्जनं भक्त्या वह्निशौचेन वाससा। रत्नसिंहासनं रम्यं विश्वकर्मादिनिर्मितम्

अपूर्वं कांस्यपात्रस्थं नैवेद्यं प्रददौ किल । अर्घ्यं मन्दाकिनीतोयसंयुक्तश्चरणे ददौ
सुगन्धिचन्दनं चारु कस्तूरीकुङ्कुमान्वितम् । प्रददौ मालतीमालां गले गरलसुन्दरे
भक्त्या पूजाञ्चकाराथ पुष्पवृष्टिञ्च तुष्टये । पीयूषं स्वर्णपात्रस्थं प्रददौ मधुरं
रत्नप्रदीपशतकं समन्ताद्धूपमुत्तमम् । त्रैलोक्यदुर्लभं वस्त्रं स्वर्णयज्ञोपवीतकम् ।
सुगन्धि शीततोयञ्च पानार्थं पार्वती ददौ । अतीव सुन्दरं रम्यं रत्नसारेन्द्रभूषणम्
दुर्लभां कामधेनुञ्च स्वर्णशृङ्गसमन्विताम् । स्नानीयन्तीर्थतोयञ्च ताम्बूलञ्च मनोहरं

दत्त्वा षोडशोपचारं प्रणनाम पुनः पुनः ।
संपूज्य शूलिनं भक्त्या ययौ नित्यं पितुर्गृहम् ॥ ४१ ॥

शुश्रावाप्सरसां वक्त्राद्देवीमिन्द्रो महेश्वरः । श्रुत्वा वार्तां शुनाशीरो ननर्त्त हर्षतः
दूतद्वारा कामदेवमानिनाय त्वरान्वितः । इन्द्राज्ञया कामदेवः प्रजगामामरावतीम्
तूर्णं प्रस्थापयामास तञ्च यत्र शिवः शिवा । पञ्चसायकसंयुक्तो जगाम पञ्चसायकः
प्रसन्नवदनं श्रीमान् यत्र शक्तियुतः शिवः । गत्वा ददर्श मदनः शिवायुक्तं शिवं

शान्तं त्रैलोक्यकान्तञ्च प्रसन्नवदनेक्षणम् ।
कामः स्थितोऽन्तरीक्षे च धृत्वा च सशरं धनुः ॥ ४६ ॥

चिक्षेपास्त्रं दुर्निवार्य्यममोघं शङ्करे मुदा । बभूवामोघमस्त्रञ्च मोघन्तत्परमात्मनि
आकाश इव निर्लिप्ते निर्लिप्ते परमात्मनि । मोघीभूते च शस्त्रे च भयमाप च मन्मथः
चकम्पेपुरतःस्थित्वा दृष्ट्वा मृत्युञ्जयंविभुम् । सस्मारत्रिदशान् कामःशक्रादीन्भयविह्वलः
आययुर्देवताः सर्वाः शम्भुकोपेन वेपिताः । चक्रुः स्तुतिञ्च स्तोत्रेण शङ्करं त्रिदशेश्वरम्
कोपाग्निमुद्गिरन्तं तं कपाललोचनादहो । स्तुतिं कुर्वत्सु देवेषु स वह्निः शम्भुसम्भवः
जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निशिखोपमः । उत्पत्य गगने घूर्णन् निपत्य धरणी

भ्रामं भ्रामञ्च परितः पपात मदनोपरि ॥ ५२ ॥

बभूव भस्मसात्कामः क्षणेन हरकोपतः । विषण्णा देवताः सर्वा नतवक्त्रा च पार्वती
विललाप बहुतरं हरस्य पुरतो रतिः । तुष्टुवुर्देवताः सर्वाः कम्पिताश्चन्द्रशेखरम् ।
रतिमूचुः सुराः सर्वे रुरुदुश्च मुहुर्मुहुः । किञ्चिद्भस्म गृहीत्वा च रक्ष मातर्भयं

...थं तं जीवयिष्यामो लभिष्यसि प्रियं पुनः। हरकोपापनयने सुप्रसन्ने दिने तथा ॥

दृष्ट्वा रतेर्विलापञ्च मूर्च्छां संप्राप पार्वती ।
अतीन्द्रियं गुणातीतं तुष्टाव चन्द्रशेखरम् ॥ ५७ ॥
रुदन्तीं पार्वतीं त्यक्त्वा स्वस्थानं प्रययौ शिवः ।
सद्यो बभूव तत्रैव पार्वतीदर्पमोक्षणम् ॥ ५८ ॥

...यौवनयोर्गर्वं तत्याज शैलकन्यका। मुखं दर्शयितुं लज्जा तद्बभूव सखीगणे ॥५९॥
...राश्च रतिमाश्वास्य सर्वे जग्मुः स्वमन्दिरम्। प्रणम्य दण्डवद्रुद्रं शोकादुद्विग्नमानसाः
...त्वा रुदित्वा शोकेन भयेन कामकामिनी। कोपरक्तेक्षणं रुद्रं राधिके स्वालयं ययौ

न जगाम पितुर्गेहे पार्वती सा तु लज्जया ।
स्वालिभिर्वार्य्यमाणापि जगाम तपसे वनम् ॥ ६२ ॥
प्रजग्मुः सहचारिण्यस्तत्पश्चाच्छोकविह्वलाः ।
मातृभिर्वार्य्यमाणा सा स्वर्णदीतीरजं वनम् ॥ ६३ ॥

...विश्च तपस्तप्त्वा सा संप्राप त्रिलोचनम्। रतिः संप्राप मदनं शङ्करस्य वरेण च ॥
...येवं कथितं सर्वं पार्वतीदर्पमोक्षणम्। निगूढचरितं राधे किम्भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
श्रीकृष्णराधिकासंवादे एकोनचत्वारिंशोऽध्यायः ।

---

# चत्वारिंशत्तमोऽध्यायः ।

## राधिकाकृष्णसंवादवर्णनम्

श्रीराधिका उवाच ।

...हो विचित्रं चरितमपूर्वं किं श्रुतं विभो। सुन्दरं श्रुतिपीयूषं निगूढं ज्ञानकारणम् ॥१॥

न विशेषं समासञ्च श्रुतं न व्यासमीप्सितम् ।
अधुना श्रोतुमिच्छामि विस्तीर्णं कथय प्रभो ॥ २ ॥

किं किं तपः कठोरञ्च चकार पार्वती स्वयम् ।
कं कं वरं वा संप्राप्य कथमाप महेश्वरम् ॥ ३ ॥
रतिः केन प्रकारेण जीवयामास मन्मथम् । पार्वतीशिवयोः कृष्ण विवाहं वर्णय
तयो रहसि सम्भोगं पापिनीपापमोचनम् ।
कथ्यतां करुणासिन्धो दुःखिनीदुःखमोचनम् ॥ ५ ॥
दम्पतीविरहोक्तिश्च कर्णज्वाला च योषितः । श्रोतुं कौतूहलं कृष्ण पुनःसम्मील
अग्निज्वाला विषज्वाला क्षमाः सोढुश्च योषितः ।
दम्पतीविरहज्वाला न श्रोतुश्च क्षणं क्षमा ॥ ७ ॥
राधिकावचनं श्रुत्वा विस्मितश्चकिताननः । विस्तीर्णं वक्तुमारेभे हृदयेन विदूय
दम्पतीविरहोक्तिश्च या राधा श्रोतुमक्षमा । विच्छेदे शतवर्षीये किमस्या भवि
इत्येवं मानसे कृत्वा मायेशो माययान्वितः । कृपासिन्धुश्च कृपया कथां कथितु

श्रीकृष्ण उवाच ।

प्राणाधिके राधिके त्वं श्रूयतां प्राणवल्लभे । प्राणाधिदेवि प्राणेशि प्राणाधारे म
वटमूलाद्गते रुद्रे पार्वती तपसे ययौ । पुनः पुनः स्वमात्रा च पित्रा च विनिवा
गत्वा सा स्वर्णदीतीरं स्नात्वा त्रिषवणं मुदा । सन्देशे च मया दत्तं जजापतं म
वर्षमेकञ्च सम्पूर्णमनाहारा स्वभक्तितः । तप्त्वा तपः कठोरञ्च चकार जगदम्बि
ग्रीष्मे च परितो वह्निं प्रज्वलन्तं दिवानिशम् ।
कृत्वा प्रतस्थौ तन्मध्ये सन्ततं जपती मनुम् ॥ १५ ॥
शश्वत् श्मशाने वर्षासु कृत्वा योगासनंशिवा । शिलां दृष्ट्वा च संसिक्ताबभूव जल
शीते जलान्तरे शश्वत् प्रतस्थौ भक्तिपूर्वकम् । अनाहारा शरद्रौद्रैर्नीहारासु निश
एवं कृत्वा परं वर्षमप्राप्य शङ्करं सती । शुचा कृत्वाग्निकुण्डञ्च प्रवेष्टुं सा समु
तामग्निकुण्डं विशतीं तपसातिकृशां सतीम् ।
दृष्ट्वा शिवः कृपासिन्धुः कृपया तां जगाम ह ॥ १६ ॥
अतीव वामनो बालो विप्ररूपी स्वतेजसा । प्रज्वलन् मनसा हृष्टो दण्डी छत्री

शुक्लयज्ञोपवीती च शुक्लवासाश्च सस्मितः । श्वेताब्जवीजमालाश्च बिभ्रत्तिलकमुज्ज्वलम्
निर्जने बालकं दृष्ट्वा स्निग्धा साति जगाद ह ।
तत्तेजसातिप्रच्छन्ना तत्याज च तपः स्वयम् ॥ २२ ॥
को भवानिति पप्रच्छ तं शिशुं पुरतः स्थितम् ।
मनसालिङ्गनं कर्त्तुमिच्छन्ती परमादरम् ॥ २३ ॥
श्रुत्वा शैलसुताप्रश्नं प्रहस्य परमेश्वरः । उवाचातीव मधुरं कर्णपीयूषमीश्वरीम् ॥२४॥

शङ्कर उवाच ।

इच्छागामी बटुरहं तपस्वी विप्रबालकः । का त्वं कान्तातिकान्तारे तपश्चरसि सुन्दरि
वद कस्य कुले जाता कस्य कन्या च काभिधा ।
तपसः फलदात्री त्वं कस्माद्धेतोस्तपस्तव ॥ २६ ॥
अहो वा तपसां राशिः स्वयं मूर्तिमती सती ।
तपो वा लोकशिक्षार्थं करोषि कमलेक्षणे ॥ २७ ॥
स्वयं तेजःस्वरूपा वा मूलप्रकृतिरीश्वरी । विधाय भक्तध्यानार्थं विग्रहं भारते जनुः ॥
किं वा त्रिलोकलक्ष्मीस्त्वं सम्पद्रूपा सनातनी ।
रक्षां विधातुं जगतामागता धातुरन्तिके ॥ २९ ॥
किंवाम्बिका त्वं देवानां स्वयं मूर्तिमती सती ।
सावित्री भारते जन्म स्वेच्छया लब्धुमागता ॥ ३० ॥
ज्ञानाधिष्ठातृदेवी वास्वयंसाक्षात् सरस्वती । सर्वविद्याः प्रकटितुं स्वेच्छया जन्मभारते
एतासु मध्ये का वा त्वं नाहं तर्कितुमीश्वरः ।
या सा भवति कल्याणि परितुष्टा च मां भव ॥ ३२ ॥
...ति त्वयि प्रसन्नायां प्रसन्नः परमेश्वरः । पतिव्रतायां तुष्टायां तुष्टो नारायणः स्वयम्
तुष्टे नारायण देवे शश्वत्तुष्टं जगत्त्रयम् । तरुमूलेषु सिक्तेषु शाखाः सिक्ता यथा प्रिये
शिशोस्तद्वचनं श्रुत्वा प्रहस्य परमेश्वरी ।
उवाच वचनञ्चारु कर्णपीयूषमीश्वरी ॥ ३५॥

पार्वत्युवाच ।

नाहं वेदप्रसूर्लक्ष्मीर्वागधिष्ठातृदेवता । जन्म मे भारते वर्षे साम्प्रतं शैलकन्यका ॥
पूर्वं जन्म दक्षगेहे सती शङ्करकामिनी । योगेन त्यक्तदेहाहं तातभर्तृ विनिन्दया॥
अत्र जन्मनि पुण्येन संप्राप्ते शङ्करे द्विज। मां त्यक्त्वा भस्मसात् कृत्वा मन्मथं स
प्रयाते शङ्करे तापाद् व्रीड़याहं पितुर्गृहात् । अगमत्तपसे चित्तं ममेदं स्वर्ण
तपः कृत्वा कठोरञ्च सुचिरं प्राणवल्लभम्। अप्राप्याग्निं प्रवेष्टुञ्च त्वांचदृष्ट्वाक्षणं

गच्छ त्वं प्रविशाम्यग्नौ प्रलयाग्निशिखोपमे ।
कृत्वा स्वकामनां विप्र हरप्राप्तिमनीषितम् ॥ ४१ ॥
यत्र यत्र जनुर्लब्ध्वा लभिष्यामि शिवं परम् ।
प्राणाधिकं प्रियं कान्तं विभुंजन्मनि जन्मनि ॥ ४२ ॥
सर्वा हि स्वप्रियं लब्धुं लभन्ति जन्म वाञ्छितम् ।
तज्जन्म पतिलाभार्थं सर्वासाञ्च श्रुतौ श्रुतम् ॥ ४३ ॥
प्राक्तनीयो हि यो भर्ता स तासां प्रतिजन्मनि ।
या स्त्री येषां सुनियता सा तेषां जन्मजन्मनि ॥ ४४ ॥

तदहमिह न प्राप्य कृत्वा घोरतरं तपः । कृत्वाग्निकुण्डे काम्यञ्च लभिष्यामि पर
इत्युक्त्वा पार्वती तत्र तत्पुरः प्रविवेश ह। निषिध्यमाना पुरतो ब्राह्मणेन पुनः
वह्निप्रवेशं कुर्वन्त्याः पार्वत्याः परमेश्वरि। बभूव तपसा सद्यो वह्निश्चन्दनवद्
क्षणं तदन्तरे स्थित्वाचोत्पतन्तीं शिवां शिवः । पुनः पप्रच्छसहसा वृन्दावनवि

श्रीमहादेव उवाच ।

अहो तपस्ते किं भद्रे न बुद्धं किञ्चिदेव हि ।
न दग्धो वह्निना देहो न च प्राप्तो मनीषितः ॥ ४६ ॥

शिवं कल्याणरूपञ्च भर्त्तारं कर्तुमिच्छसि । अविग्रहं पतिं कृत्वा किंवातेवाञ्छि
संहर्तारञ्च भर्तारं यदिच्छसि शुचिस्मिते । कान्तमिच्छति कावास्त्रीसर्वसंहार
मोक्षं वाञ्छसि चेद्देवि कृत्वाकान्तस्वरूपिणम् । सर्वमुक्तिप्रदा त्वञ्चतपस्यावि

शिवश्च मङ्गले मोक्षे संहर्ता न च दृश्यते। शिवशब्दस्य चान्यार्थो न हि वेदे निरूपितः
स्य संहारकर्तारं यदि वाञ्छसि सुन्दरि। लभिष्यसे रतं रुद्रं सर्वलोकभयङ्करम् ।५४।
भविष्यति मोक्षस्ते स्वाभीष्टं देवसेवनम्। हरिस्मृतिरमोघा च सर्वमङ्गलदा सदा॥
पितुर्गृहं गच्छ तत्र द्रक्ष्यसि शङ्करम्। ममाशिषा स्वतपसां फलेन च सुदुर्लभम्
युक्त्वा पार्वतीं विप्रस्तत्रैवान्तरधीयत। दुर्गा ययौ पितुर्गेहं महादेवेति वादिनी ।५७।
र्वतोगमनं श्रुत्वा मेनका च हिमालयः। दिव्यं यानं पुरस्कृत्य प्रययौ हर्षविह्वलः॥
स्थाप्य मङ्गलघटान् राजवर्त्मनि राधिके। चन्दनागुरुकस्तूरीफलशाखासमन्वितान्॥
सूत्रसन्निबद्धरसालपल्लवान्वितैः। परितः परितो रम्भास्तम्भवृन्दसमन्विते ॥ ६० ॥
तिपुत्रवती योषित्समूहैर्दीपहस्तकैः। पूर्णैर्लाजाधान्यदूर्वाफलपुष्पसमन्वितैः ॥ ६१ ॥
पुण्यैर्ब्राह्मणैश्चापि मुनिभिर्ब्रह्मचारिभिः। नटीभिर्नर्तकीभिश्च गजेन्द्रैः परिशोभिते ॥
रोहितैश्च संयुक्तैः कुर्वद्भिर्मङ्गलध्वनिम्। सुचारुमालतीमालाहस्तैः शस्तैः प्रशंसितैः ॥
नाप्रकारवाद्यैश्च शङ्खध्वनिसुनादितैः। सिन्दूररेणुभिश्चारुचन्दनद्रवपङ्किलम् ॥ ६४ ॥
विश्य नगरं दुर्गा ददर्श पितरौ पुरः। सुप्रसन्नौ प्रधावन्तौ हर्षाश्रुपुलकान्वितौ ।६५।
सन्नवदना देवी चालिभिः प्रणनाम तौ। संयुज्याथाशिषन्तौ च चक्रतुस्ताञ्च वक्षसि
वत्से वत्सेत्युच्चार्य्य रुदन्तौ प्रेमविह्वलौ। तदा ताञ्च रथे कृत्वा जग्मतुर्निजमन्दिरम्
त्रयो निर्मञ्छनञ्चक्रुर्विप्रा युयुजुराशिषम्। ब्राह्मणेभ्यश्च वन्दिभ्यः पर्वतेन्द्रो धनं ददौ

मङ्गलं कारयामास पाठयामास छान्दसम्।
एवं स्वकन्यया सार्द्धं तस्थतुस्तौ स्वमन्दिरे ॥ ६६ ॥
सुखेन वसतौ तौ हि हर्षनिर्भरमानसौ।
एकदा च तपः कर्तुं जगाम स्वर्णदीं गिरिः ॥ ७० ॥

नका कन्यया सार्द्धमुवास प्राङ्गणे मुदा। एतस्मिन्नन्तरे भिक्षुर्नर्तकश्च सुगायनः॥
सैक आजगाम मेनकासन्निधिं मुदा। शृङ्गवाद्यं वामहस्ते डमरुं दक्षिणे तथा॥

कृत्वा विभूतिगात्रोऽतिवृद्धोऽतीवजरातुरः।
पृष्ठकन्थो रक्तवासाः सुकण्ठोऽतिमनोहरः ॥ ७२ ॥

जगौ मम गुणाख्यानं कृत्वा नृत्यं मनोहरम्।
वादयामास भृङ्गञ्च क्षणं डमरुकं तथा ॥ ७४ ॥
आजग्मुर्नागरा बाला बालिका हर्षविह्वलाः।
वृद्धा युवानो युवतीसमूहा वृद्धयोषितः ॥ ७५ ॥

श्रुत्वा तु सुन्दरं गीतं सुतानस्वरसंयुतम्। सहसा मुमुहुः सर्वे तेन मूर्च्छामवा
मूर्च्छां संप्राप सा दुर्गा ददर्श हृदि शङ्करम्। त्रिशूलपट्टिशकरं व्याघ्रचर्मधरं प
विभूतिभूषणं रम्यमस्थिमालां सुनिर्मलाम्। ईषद्धास्यप्रसन्नास्यं सुप्रसन्नं त्रिलो
मालाहस्तं पञ्चवक्त्रं नागयज्ञोपवीतकम्। वरं वृण्वित्युक्तवन्तं सुन्दरं चन्द्रशेख
हृदयस्थं हरं दृष्ट्वा मनसा तं ननाम सा। वरं वव्रे मानसे सा त्वं पतिर्मे भवेति
एवं दत्त्वा शिवस्तस्यै चान्तर्धानश्चकार सः। न दृष्ट्वा हृदि तं दुर्गा संप्राप्य चेतनां
ददर्श चक्षुरुन्मील्य भिक्षुकं गायकं पुरः। नृत्यसंगीततः सा तु भिक्षुकस्य च मेन

दातुं ययौ सा रत्नानि स्वर्णपात्रस्थितानि च।
भिक्षां ययाचे भिक्षुस्तां दुर्गां नान्यां गृहीतवान् ॥ ८३ ॥

पुनश्च नर्त्तनं कर्तुमुद्यतः कौतुकेन च। मेना तद्वचनं श्रुत्वा चुकोप विस्मयं
भिक्षुकं भर्त्सयामास बहिःकर्तुमुवाच तम्। पत्नी त्रिलोकनाथस्य शिवस्यपत्न

याच्ञामिमां प्रकुर्वन्तं दूरं कुरु सुभाषिणम्।
एतस्मिन्नन्तरे तप्त्वा गिरिः स्वालयमाययौ ॥ ८६ ॥

ददर्श पुरतो भिक्षुं प्राङ्गणस्थं मनोहरम्। कृत्वा नारायणार्चाञ्च गङ्गातीरे मनो
तन्मूर्त्तिध्यानविश्लेषशोकादुद्विग्नमानसः। श्रुत्वा मेनामुखाद्वार्तां जहासच चुको
आज्ञां चकार स्वचरं बहिः कर्तुञ्च भिक्षुकम्। आकाशमिव दुःस्पर्शं प्रज्वलन्तं स्व
न शशाक बहिः कर्तुं समीपं गन्तुमक्षमः। ददर्श भिक्षुकं शैलः क्षणञ्चारुचतुर्भु
किरीटिनं कुण्डलिनं पीताम्बरधरं परम्। सुवेशं सुन्दरश्याममीषद्धास्यं मनोह
चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकातरम्। यद्यत् पुष्पं प्रदत्तञ्च पूजाकाले गदाभृ
गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह। धूपः प्रदीपो यो दत्तो नैवेद्यं वा म

ददर्श शैलस्तत्सर्वं भिक्षुकस्य पुरःस्थितम् । क्षणं ददर्श द्विभुजं विनोदमुरलीकरम् ॥
गोपवेशं किशोरञ्च सस्मितं श्यामसुन्दरम् । मयूरपिच्छचूडञ्च रत्नालङ्कारभूषितम् ॥
चन्दनोक्षितसर्वाङ्गं वनमालाविभूषितम् । क्षणं ददर्श स्वच्छञ्च शङ्करं चन्द्रशेखरम् ॥
त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं परम् । विभूतिगात्रममलमस्थिमालाविभूषितम् ॥ ६७॥
नागयज्ञोपवीतञ्च तप्तस्वर्णजटाधरम् । डमरुशृङ्गहस्तञ्च सुप्रशस्तं मनोहरम् ॥ ६८ ॥
जपन्तं हरेर्नाम श्वेताब्जबीजमालया । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ ६९॥

स्वतेजसा प्रज्वलन्तं पञ्चवक्त्रं त्रिलोचनम् ।
क्षणं ददर्श जगतां स्रष्टारञ्च चतुर्मुखम् ॥ १०० ॥
जपन्तं श्रीहरेर्नामस्वच्छ स्फटिकमालया ।
क्षणं सूर्य्यस्वरूपञ्च ददर्श त्रिगुणात्मकम् ॥ १०१ ॥

ग्रीष्मार्तातीवतीव्रं तं ज्वलन्तं ब्रह्मतेजसा । क्षणमग्निस्वरूपञ्च ज्वलन्तमतितेजसा ॥१०२॥
क्षणमाह्लादजनकं चन्द्ररूपं ददर्श ह । क्षणं तेजःस्वरूपञ्च निराकारं निरञ्जनम् ॥१०३॥
निर्लिप्तञ्च निरीहञ्च परमात्मस्वरूपिणम् । एवं स्वेच्छामयं दृष्ट्वा नानारूपधरं परम् ॥
साश्रुपुलकः शैलो दण्डवत् प्रणनाम तम् । भक्त्या प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः
समुत्पत्य हर्षयुक्तो ददर्श पुनरेव तम् । वास्तवं भिक्षुकं दृष्ट्वा शैलेन्द्रोविष्णुमायया

विसस्मार च तत्सर्वं नानारूपधरं परम् ।
भिक्षां ययाचे भिक्षुस्तं भिक्षास्थालीस्वपार्श्वकम् ॥ १०७ ॥
रक्ताम्बरः श्रृङ्गवाद्यविचित्रडमरुः करे ।
आदातुमुत्सुको दुर्गां नान्यां भिक्षुः कदाचन ॥ १०८ ॥
न स्वीचकार शैलेन्द्रो मोहितो विष्णुमायया ।
भिक्षुः किञ्चिन्न जग्राह तत्रैवान्तरधीयत ॥ १०९ ॥

तदा बभूव ज्ञानञ्च मेनकाशैलयोः प्रिये । अहो दृष्टो जगन्नाथ आवाभ्यां स्वप्नवद्दिने ॥

आवां शिवो वञ्चयित्वा स्वस्थानं गतवान् विभुः ।
तयोर्भक्तिं शिवे दृष्ट्वा सर्वे देवाश्च चिन्तिताः ॥ १११ ॥

चक्रुः शक्रादयो युक्तिं सुमेरो रक्षणे भरात् ।
एकान्तभक्त्या शैलश्चेत् कन्यां तस्मै प्रदास्यति ॥ ११२ ॥

ध्रुवं निर्वाणतांसद्यः संप्राप्नोत्येव भारते । अनन्तरत्नाधारश्चेत् पृथ्वींत्यक्त्वाप्रया
रत्नगर्भाभिधा भूमेर्मिथ्यैव भविता ध्रुवम् । स्थावरत्वं परित्यज्य दिव्यरूपं विधा
कन्यां शूलभृतेदत्त्वा विष्णुलोकं गमिष्यति । नारायणस्यसारूप्यं भविष्यत्येव

संप्राप्य पार्षदत्वञ्च हरिदासो भविष्यति ।
दशवापीसमा कन्या दीयते ब्राह्मणाय ताम् ॥ ११६ ॥

वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने । सन्ध्यायज्ञवेदपाठकारिणे सत्यवादिने
अस्मै प्रदत्ता कन्या च दशवापीफलप्रदा । त्रिसन्ध्याकारिणे सत्यवादिने गृहशालि
वेदज्ञाय सुविप्राय दत्त्वा सुफलदायिनो । परदारगृहीताय याजकाय द्विजा
शठाय सन्ध्याहीनाय वाप्यैकफलदा सुता । सर्वसन्ध्यास्वगायत्रीविहीनाय श
वैश्योद्भवाय दत्ता या वाप्यर्द्धफलदा स्मृता । पापिने शूद्रजाताय विप्रक्षत्रोद्भवा

दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा ।
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ॥ १२२ ॥

जितेन्द्रियाय दत्ता या विंशद्वापीफलप्रदा । षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च
एवम्भूताय दत्ता चेन् मोदते विष्णुमन्दिरे । दत्त्वा कन्यां सुशीलाञ्च हराय हरे
नारायणस्वरूपञ्च भवेदेव श्रुतौ श्रुतम् । विष्णुभक्तो यदा कन्यां ददाति विष्णु
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च । इत्यालोच्य सुराः सर्वे कृत्वाच मन्त्र
गुरुं प्रस्थापितुं जग्मुर्हिमालयगृहं प्रति । गत्वा प्रणम्यच गुरुं सर्वे चक्रुर्निवे
हिमालयगृहं गत्वा कुरु निन्दाञ्च शूलिनः । पिनाकिनं विना दुर्गा वरं नान्यं व
अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति । कालेन यातु शैलेन्द्रश्चेदानीं भु
अनन्तरत्नाधारञ्च त्वमेव रक्ष भारते । देवानां वचनं श्रुत्वा प्रददौ कर्णयोः
न स्वीचकार स्व गुरुः स्मरन्नारायणेति च । उवाच देववर्गांश्च संभर्त्स्यं च

वेदवेदान्तविज्ञाता महाभक्तो हरौ हरे ॥ १३१ ॥

वृहस्पतिरुवाच ।

श्रूयतां मद्वचः सत्यं हे देवाः स्वार्थसाधकाः ।
नीतिसारञ्च वेदोक्तं परिणामसुखावहम् ॥ १३२ ॥

[ह]रकेशवयोर्भक्तं ये च निन्दन्ति पापिनः । भूदेवान् ब्राह्मणांश्चैव स्वगुरुं च पतिव्रता ॥
पतिभिक्षुब्रह्मचारीसृष्टिबीजान् सुरांस्तथा ।
पच्यन्ते कालसूत्रे ते यावच्चन्द्रदिवाकरौ ॥ १३४ ॥

[श्ले]ष्ममूत्रपुरीषेषु शेरते ते दिवानिशम् । भक्षिता कीटनिकरैः शब्दं कुर्वन्ति कातराः ॥
ये निन्दन्ति च ब्रह्माणं स्रष्टारं जगतां गुरुम् ।
शिवं सुराणां प्रवरं दुर्गां लक्ष्मीं सरस्वतीम् ॥ १३६ ॥

[सी]ताञ्च तुलसीं गङ्गां वेदांश्च वेदमातरम् । व्रतं तपस्यां पूजाञ्च मन्त्रं मन्त्रप्रदं गुरुम् ॥
पच्यन्तेऽन्धकूपे वै चायुषोऽर्द्धं विधेरहो । भक्षिताःसर्वसङ्घैश्च शब्दं कुर्वन्तिसन्ततम्
निन्दन्ति हृषीकेशं देवसाम्यं विधाय च । विष्णुभक्तिप्रदश्चैव पुराणञ्च श्रुतेः परम् ॥
[व]ात्तदङ्गजां गोपीर्ब्राह्मणांश्च सदार्चितान् । ते पच्यन्ते वटे देवा विधातुरायुषा समम्
[अ]धोमुखा ऊर्द्ध्वजंघाः सर्पसङ्घैश्च वेष्टिताः । भक्षिता विकृताकारैः कीटैः सर्पसमाकृतैः
[स]दैवकातराभीताःशब्दं कुर्वन्ति सन्ततम् । श्लेष्ममूत्रपुरीषाणि ध्रुवं भक्षन्तिक्षोभिताः
उल्कां ददति रुष्टाश्च सन्मुखे यमकिङ्कराः ।
त्रिसन्ध्यन्तर्जनं कृत्वा कुर्वन्ति दण्डताड़नम् ॥ १४३ ॥

[कुर्]वन्ति मूत्रपानञ्च प्रहारैस्तृषितान् भिया । तदा कल्पान्तरे स्रष्टुं सृष्टिञ्च प्रथमे पुनः ॥
तेषां भवेत् प्रतीकार इत्याह कमलोद्भव ॥ १४५ ॥

कृत्वा हि शिवनिन्दाञ्च यास्यन्ति नरकं सुराः ।
इममेवोपकारञ्च कर्तुमिच्छथ पुत्रकाः ॥ १४६ ॥

[ब्र]ह्मणा प्रेरितो दक्षो दत्त्वा शूलभृते सुताम् । न पापं परमैश्वर्यं संप्राप हरनिन्दकः ॥
[मु]निच्छया सुतांदत्त्वा तुर्य्यपुण्यं ललाभ सः। अहो विहायसारूप्यं तुच्छंसर्गंललाभसः
[क]श्चिन्मध्ये च युष्माकं गत्वा शैलगृहं सुराः । सम्पादयत स्वमतं शैलेन्द्रस्य प्रयत्नतः॥

अनिच्छया सुतांदत्त्वा सुखंतिष्ठतु भारते। तस्मैभक्त्यासुतांदत्त्वामोक्षंप्राप्स्यतिनि
पश्चात्सप्तर्षयःसर्वे गृहीत्वा तामरुन्धतीम्। ध्रुवं तस्य गृहंगत्वा बोधयिष्यन्तिप
विना पिनाकिनं दुर्गा वरं नान्यं वरिष्यति। अनिच्छया सुतां तस्मै प्रदास्यति सु
इत्येवं कथितं सर्वं देवा गच्छन्तु मन्दिरम्।
इत्युक्त्वा वाक्पतिः शीघ्रं तपसे स्वर्णदीङ्गतः ॥ १५३ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधिकाकृष्णसंवादे चत्वारिंशत्तमोऽध्यायः।

---

## एकचत्वारिंशत्तमोऽध्यायः

### देवब्रह्मसंवादवर्णनम्।

श्रीकृष्ण उवाच।

तदा देवाःसमालोच्य जग्मुस्ते ब्रह्मणोऽन्तिकम्। सर्वेनिवेदयामासुर्ब्रह्माणं जग
देवा ऊचुः।
ततः सृष्टौ जगत्स्रष्टा रत्नाधारो हिमालयः। स चेत्प्राप्स्यतिमोक्षञ्च रत्नगर्भा कु
सुतां शूलभृते दत्त्वा भक्त्या शैलेश्वरःस्वयम्। नारायणस्यसारूप्यंसम्प्राप्स्यति
त्वं तस्य निन्दनं कृत्वा विमतिं प्रतिपादय। त्वयाविना क्षमो नान्यो गच्छशैल
देवानां वचनं श्रुत्वा तानुवाच विधिः स्वयम्। वचनं नीतिसारञ्च कर्णपीयूषमु
ब्रह्मोवाच।
नाहं कर्त्तुं क्षमो वत्साःशिवनिन्दां सुदुष्कराम्। सम्पद्विनाशरूपाञ्च विपदोबीज
भूतेशं प्रस्थापयत स्वात्मनिन्दां करोतु सः। परनिन्दाविनाशाय स्वनिन्दा य
ब्रह्मणो वचनं श्रुत्वा तं प्रणम्य सुराः प्रिये।
शीघ्रं ययुस्ते कैलासं गत्वा च तुष्टुवुः शिवम् ॥ ८ ॥

...र्वे निवेदयामासुः शङ्करं करुणालयम्। स ययौ शैलमूलञ्च तानाश्वास्य प्रहस्य च ॥
...ा मुमुदिरे सर्वे शीघ्रं गत्वा स्वमन्दिरम्। इष्टसिद्धिर्मुदे शश्वदसिद्धिर्दुःखवर्द्धिनी ॥
...य शैलः सभामध्ये समुवास मुदान्वितः। बन्धुवर्गैः परिवृतः पार्वतीसहितः स्वयम्।
...स्मिन्नन्तरे तत्र विप्ररूपी शिवः स्वयम्। समाजगाम सहसा प्रसन्नवदनेक्षणः ॥
दण्डी छत्री दीर्घवासा बिभ्रत्तिलकमुत्तमम्।
करे स्फटिकमालाञ्च शालग्रामं गले दधत् ॥ १३ ॥
...ं दृष्ट्वा समुत्तस्थौ सगणश्च हिमालयः। ननाम दण्डवद्भूमौ भक्त्याऽतिथिमपूर्वकम्
ननाम पार्वती भक्त्या प्राणेशं विप्ररूपिणम्।
आशिषं युयुजे विप्रः सर्वेषां प्रीतिपूर्वकम् ॥ १५ ॥
...दत्तासने शीघ्रमुवास ब्राह्मणः स्वयम्। मधुपर्कादिकं सर्वं जग्राह प्रीतिपूर्वकम् ॥
...च्छ कुशलं शैलो ब्राह्मणं को भवानिति। उवाच सर्वं विप्रेन्द्रो गिरीन्द्रं सादरेण च

ब्राह्मण उवाच।

...िकां वृत्तिमाश्रित्य भ्रमामि धरणीतले। मनोयायी सर्वगामी सर्वज्ञोऽहं गुरोर्वरात्
...ा ज्ञातं शङ्कराय सुतां दातुं त्वमिच्छसि। इमां पद्मासमां दिव्यामज्ञातकुलशीलिने ॥
...ाश्रयायासङ्गायारूपाय निर्गुणाय च। श्मशानगामिने सर्वभूतनाथाय योगिने ॥२०
...वाससेऽहिगात्राय विभूतिभूषणाय च। व्यालग्राहिस्वरूपाय कालव्यायादयाय च
...ातमृत्यवेऽज्ञायानाथायाबन्धवे भवे। तप्तस्वर्णजटाभारधारिणे निर्धनाय च ॥ २२॥
...ातवयसेऽतीववृद्धाय चाविकारिणे। सर्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे ॥
...ोध ज्ञानिनां श्रेष्ठं नारायणकुलोद्भवम्। स ते पात्रानुरूपश्च पार्वतीदातृकर्मणि ॥
...जनः स्मेरमुखः श्रुतिमात्राद्भविष्यति। लक्षशैलाधिपस्त्वञ्च न तस्यैकोऽस्तिबान्धवः
...वान् मेनकां प्रश्नंकुरु शीघ्रं प्रयत्नतः। सर्वान् पप्रच्छ यत्नेन हे बन्धो पार्वतींविना
रोगिणे नौषधं शश्वत्कुपथ्यं रोचते सदा।
इत्युक्त्वा ब्राह्मणः शीघ्रं स्नात्वा भुक्त्वा मुदान्वितः।
जगाम स्वालयं शान्तो वृन्दावनविनोदिनि ॥ २७ ॥

५१—

ब्राह्मणस्य वचः श्रुत्वा मेनोवाच हिमालयम् । शोकेन साश्रुनयना हृदयेन वि

मेनकोवाच ।

शृणु शैलेन्द्र मद्वाक्यं परिणामसुखावहम्। पृच्छ शैलवरानस्मै न दास्यामि सु

त्यक्ष्यामि सर्वान्विषयान् भक्ष्यामि विषमेव च ।

गले बध्वाम्बिकां पश्य यास्यामि घोरकाननम् ॥ ३० ॥

गृहीत्वा पार्वतींमेना गत्वा कोपालयं रुषा । त्यक्त्वाऽऽहारं रुदन्ती च चकार शय

एतस्मिन्नन्तरे तत्र वशिष्ठो भ्रातृभिः सह । आजगाम पुनस्तैश्च युक्ता पश्चादरु

प्रणम्य शैलस्तान् सर्वान् स्वर्णसिंहासनंददौ । दत्त्वा षोड़शोपचारं पूजयामास

ऋषयश्च सभामध्ये सुखमूषुः सुखासने । जगामारुन्धती तूर्णं यत्र मेना च पार्वत

गत्वा ददर्श मेनाञ्च शयानां शोकमूर्च्छिताम् ।

उवाच मधुरं साध्वी सावधानां हितं वचः ॥ ३५ ॥

अरुन्धत्युवाच ।

उत्तिष्ठ मेनके साध्वि त्वद्गृहेऽहमरुन्धती ।

पितृणां मानसीं कन्यां मां जानीहि विधेर्वधूम् ॥ ३६ ॥

अरुन्धत्याः स्वरंश्रुत्वा शीघ्रमुत्थाय मेनका । उवाच शिरसा नत्वा तां पद्माभि

मेनकोवाच ।

अहोऽद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम् । वधूर्जगद्विधेः पत्नी वशिष्ठस्य

सम्भ्रमेणेदमेवोक्तं गृहं तेऽहञ्च किङ्करी । ईश्वरी जगतां स्त्रष्टुरागता बहुपुण्यतः

पाद्यं दत्त्वा स्वर्णपीठे वासयामास तां सतीम् ।

भोजयामास मिष्टान्नं बुभुजे कन्यया सह ॥ ४० ॥

शिवस्य हेतोर्नीतिश्च बोधयामास मेनकाम् । अरुन्धती प्रसङ्गेन सम्बन्धयोज

अथ शैलमृषीन्द्राश्च नीतिसारं परं वचः । बोधयामासुः सम्बन्धयोजनानि प्र

ऋषय ऊचुः ।

शैलेन्द्र श्रूयतां वाक्यमस्माकं शुभकारणम् । शिवाय पार्वतीं देहि संहर्तुः

…भाविताऽरं द्वेशं बोधयाशु प्रयत्नतः । तव शङ्काविनाशाय ब्रह्मा सम्बन्धकर्मणि ॥४४
…ळको दारसंयोगे शङ्करो योगिनां वरः । विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति
…हितुस्ते तपस्यान्ते प्रतिज्ञानं चकार सः । हेतुद्वयेन योगीन्द्रो विवाहञ्च करिष्यति ॥
…षीणां वचनं श्रुत्वा प्रहस्य च हिमालयः । उवाच किञ्चिद्भीतश्च परं विनयपूर्वकम् ॥

हिमालय उवाच ।

शिवस्य राजसामग्रीं न हि पश्यामि काञ्चन ।
किञ्चिदाश्रममैश्वर्य्यं किं वा स्वजनबान्धवम् ॥ ४८ ॥

…कन्यामतिनिर्लिप्तयोगिने दातुमर्हति । यूयं विधातुःपुत्राश्च सत्यं वदत निश्चितम् ॥
…कुरूपाय पुत्राय पिता कन्यां ददातिचेत् । कामाल्लोभाद्भयान्मोहाच्छताब्दं नरकं व्रजेत्
…हि दास्याम्यहं कन्यामिच्छया शूलपाणिने । यद्विधानं भवेद्योग्यमृषयस्तद्विधीयताम्
…मालयवचः श्रुत्वा वशिष्ठो विधिनन्दनः । वेदवेदाङ्गविज्ञाता वेदोक्तं वक्तुमुद्यतः ॥ ५२

वशिष्ठ उवाच ।

…नं त्रिविधं शैल लौकिके वैदिके तथा । सर्वं जानाति शास्त्रज्ञो निर्मलज्ञानचक्षुषा ॥
…सत्यमहितं पश्चात् साम्प्रतं श्रुतिसुन्दरम् । सुबुद्धं शत्रुर्वदति न हितञ्च कदाचन ॥५४
…पातप्रीतिजनकं परिणामसुखावहम् । दयालुर्धर्मशीलश्च बोधयत्येव बान्धवम् ॥५५॥

श्रुतिमात्रात् सुधातुल्यं सर्वकाले सुखावहम् ।
सत्यसारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥ ५३ ॥
एवञ्च त्रिविधं शैल नीतिशास्त्रनिरूपितम् ।
कथ्यतां त्रिषु मध्ये किं वदामि वाक्यमीप्सितम् ॥ ५७ ॥

…सम्पद्विहीनश्च शङ्करस्त्रिदशेश्वरः । तत्त्वज्ञानसमुद्रेषु संनिमग्नैकमानसः ॥ ५८ ॥

आपातभ्रमसम्पत्तिर्विद्युच्छ्रीरिव नाशिनी ।
सदानन्दस्येश्वरस्य स्वात्मारामस्य का स्पृहा ॥ ५६ ॥
गृही ददाति स्वसुतां राज्यसम्पत्तिशालिने ।
कन्यां विद्विषिणे दत्त्वा कन्याघाती भवेत् पिता ॥ ६० ॥

को वदेच्छङ्करो दुःखी कुबेरो यस्यकिङ्करः । भ्रूभङ्गलीलया सृष्टिं स्रष्टुं नष्टुं क्षमो
निर्गुणः परमात्मा च य ईशः प्रकृतेः परः । सर्वेशः स च निर्लिप्तो लिप्तश्च सर्व
स एकः सृष्टिसंहारे स सर्वः सृष्टिकर्मणि ।
निराकारश्च साकारो विभुः स्वेच्छामयः स्वयम् ॥ ६३ ॥
य ईशस्त्रिविधां मूर्त्तिं विधत्ते सृष्टिकर्मणि ।
सृष्टिस्थित्यन्तजननीं ब्रह्मविष्णुशिवाभिधाम् ॥ ६४ ॥
ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत् ।
शिवः कैलासवासी च सर्वाः कृष्णविभूतयः ॥ ६५ ॥
श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः । चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुज
तस्य देवस्य तेंऽशाश्च ब्रह्मविष्णुमहेश्वराः । केचिद्देवाः कलास्तस्य कलांशाश्चे
कृष्णः सृष्ट्युन्मुखश्चापि प्रकृतिं तत्र निर्ममे । निर्माय ताञ्च तद्योनौ वीर्य्याधान
ततो डिम्भः समुद्भूतस्तन्मध्ये च महाविराट् ।
महाविष्णुः स विज्ञेयो श्रीकृष्णः षोड़शांशकः ॥ ६६ ॥
नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः । भालोद्भवस्तस्य स्रष्टुः शङ्करश्चन्द्र
महाविष्णोर्वामपार्श्वात्संभूतो विष्णुरेव च । सर्वे प्राकृतिकाःशैल ब्रह्मविष्णु
धत्ते चतुर्विधां मूर्तिं प्रकृतिः कृष्णसंभवा । अंशेन लीलया सृष्ट्यै कलया बहु
कृष्णवामाङ्गसंभूता राधा रासेश्वरीस्वयम् । मुखाद्भवा स्वयं वाणी रागाधिष्ठा
वक्षःस्थलोद्भवाः लक्ष्मीः सर्वसम्पत्स्वरूपिणी ।
शिवा तेजःसु देवानामाविर्भावं चकार सा ॥ ७४ ॥
निहत्य दानवान् सर्वान् देवेभ्यश्च श्रियंददौ । प्राप्य कल्पान्तरे जन्म जठरे दक्ष
नाम्नासतीशिवं प्रापदक्षस्तस्मैददौ च ताम् । योगेनदेहं तत्याजश्रुत्वा सा भर्त
पितृणां मानसी कन्या मेनका तव गेहिनी । ललाभ तस्या जठरे जन्म सा जगद
शिवा शिवस्य पत्नीयं शैल जन्मनि जन्मनि ।
कल्पे कल्पे बुद्धिरूपा ज्ञानिनां जननीपरा ॥ ७८॥

जातिस्मरा च सर्वज्ञा सिद्धिदा सिद्धिरूपिणी।
अस्या अस्थि चिताभस्म भक्त्या धत्ते शिवः स्वयम्॥ ७९॥
देहि त्वं स्वेच्छया कन्यां देहि भद्र शिवाय च।
अथवा सा स्वयं कान्तस्थानं यास्यति द्रक्ष्यति॥ ८०॥
...कनाद्यस्य या कान्तासा तं प्राप्नोतिवल्लभम्। प्रजापतेर्निबन्धश्चन कोऽपिखण्डितुंक्षमः
...वाहेनोत्सुकःशम्भुःस्वात्मारामश्चतत्त्ववित्। तुष्टुवुस्तंसुराःसर्वेतारकाख्येनपीड़िताः
...नानां पीड़नं दृष्ट्वा ब्रह्मणा प्रार्थितो विभुः। कृपया स्वीचकाराशु कृपालुर्देवसंसदि
...त्वाप्रतिज्ञांयोगीन्द्रोदृष्ट्वाक्लेशमसंख्यकम्। दुहितुस्तेतपःस्थानमाजगामद्विजात्मकः
तामाश्वास्य वरं दत्वा जगाम निजमन्दिरम्।
तच्छ्रुत्वैवाययुः सर्वे सुराः शक्रादयो मुदा॥ ८५॥
...रायणश्च भगवान् ब्रह्मा धर्मश्च सांप्रतम्। ऋषयो मुनयः सर्वे गन्धर्वा यक्षराक्षसाः
... सर्वे मुदा युक्तैः समालोचनकर्तृभिः। प्रस्थापिता वयं शीघ्रमनृणा सा अरुन्धती
... प्रबोधने प्रीतिर्वर्द्धते महती सदा। संप्राप्तशुभकार्य्यञ्च सर्वकालसुखावहम्॥ ८८॥
शिवां शिवाय शैलेन्द्र स्वेच्छया चेन्न दास्यसि।
भविता वा विवाहश्च भवितव्यबलेन च॥ ८९॥
...गमिष्यति देवो यो नारायणसहायवान्। रत्नसाररथे कृत्वा देवानां प्रवरं वरम्॥
...गीन्द्राणां वरेण्यं तं ज्ञानिनाञ्च गुरोर्गुरुम्। आदिमध्यान्तरहितमविकारमजं परम्
...रं ददौ शिवायै स शिवश्च तपसः स्थले। नहीश्वरप्रतिज्ञातं दुर्लभं विफलं भवेत्॥
...ह्मादिस्तम्बपर्य्यन्तं सर्वं नश्वरमस्थिरम्। अहो प्रतिज्ञा दुर्लङ्घ्या साधूनामविनाशिनी
एको महेन्द्रः शैलानां पक्षान् चिच्छेद लीलया।
पवनो लीलया मेरोः शृङ्गभङ्गं चकार ह॥ ९४॥
...वा शैलेषु योद्धारः सुरैः सह हिमालयं। पतिष्यन्ति समुद्रेषु पवनैः प्रेरिताः क्षणात्
...कार्थे यदि शैलेन्द्र सर्वसम्पद्विनश्यति। सर्वान् रक्षति तद्दत्त्वा विना च शरणागतम्
...रणागतरक्षार्थे प्राणांश्च दातुमर्हति। पुत्रदारधनं सर्वानिति नीतिविदो विदुः॥९७॥

दत्त्वा विप्राय स्वसुतामनारण्यो नृपेश्वरः । ब्रह्मशापाद्विमुक्तश्च ररक्ष सर्वसम्
तमाशु बोधयामासुर्नीतिशास्त्रविदो जनाः ।
ब्रह्मशापनिमग्नञ्च ब्रह्मण्यमतिकातरम् ॥ ९९ ॥
त्वमेव शैलराजेन्द्र सुतां दत्त्वा शिवाय च । रक्ष सर्वान् बन्धुवर्गान् वशे कुरु सु
वशिष्ठस्य वचः श्रुत्वा प्रहस्य पर्वतेश्वरः । पप्रच्छ नृपवृत्तान्तं हृदयेन विदूयता

हिमालय उवाच ।

कस्य वंशोद्भवो ब्रह्मन्ननारण्यो नृपेश्वरः । सुतां दत्त्वा स च कथमरक्षत् सर्वस

वशिष्ठ उवाच ।

मनुवंशोद्भवो राजा सोऽनारण्यो नृपेश्वरः। चिरजीवी धर्मशीलो वैष्णवो विजि
स्वायम्भुवो मनुः पूर्वं ब्रह्मपुत्रोऽतिधार्मिकः । राज्यं चकार धर्मेण युगानामेकस
ततो जगाम वैकुण्ठं सहितः शतरूपया ।
संप्राप्य दास्यं सान्निध्यं हरेर्दासो बभूव ह ॥ १०५ ॥
मनुर्बभूव तत्पश्चात् स्वयं स्वारोचिषो महान् । स्वारोचिषे गते शैल बभूव मनु
उत्तमे निर्गते धर्मी तामसो मनुरेव च । ततो मनुर्बभूवात्र रैवतो ज्ञानिनां वर
चाक्षुषश्च ततो ज्ञेयः श्राद्धदेवश्च सप्तमः । सावर्णिरष्टमो ज्ञेयः श्रीसूर्य्यतनयो
चैत्रवंशोद्भवो राजा पुराऽऽसीत् सुरथो भुवि ।
नवमो दक्षसावर्णिर्ब्रह्मसावर्णिको दश ॥ १०६
एकादश मनुश्रेष्ठो धर्मसावर्णिरुच्यते । ततश्च रुद्रसावर्णिर्विष्णुभक्तो जितेन्
तत्परो देवसावर्णिरिन्द्रसावर्णिकस्ततः । इत्येवं कथितं बन्धो मनवश्च चतुर्द
एतेषु समतीतेषु बभूव ब्रह्मणो दिनम् । इन्द्रसावर्णिवृत्तान्तं सर्वं मत्तो नि
मनूनां प्रवरो धर्मो शुद्धभक्तो गदाभृतः । चकार राज्यं धर्मेण युगानामेकस
राज्यं दत्त्वा सुरेन्द्राय जगाम तपसे वनम् ।
सुरेन्द्रस्य सुतः श्रीमान् श्रीनिकेतुर्महाबलः ॥ ११४ ॥
तस्य पुत्रो महायोगी पुरीषतरुरेव च । तस्य पुत्रोऽतितेजस्वी गोकामुख

दृश्रवाः सुतस्तस्य तत्पुत्रो भानुरेव च। पुण्डरीकः सुतस्तस्य तत्पुत्रोजिह्वलस्तथा
ह्वलस्यसुतः शृङ्गी तत्पुत्रो भीमएवच। तत्पुत्रोऽपि यशश्चन्द्रो यशसाचशशीजितः
कीर्तिनिर्मलां सन्तो गायन्ति सन्ततंसुराः। तस्य पुत्रो वरेण्यश्च पुरारण्यश्चतत्सुतः

तत्पुत्रो धार्मिकः श्रीमान् धरारण्यश्च एव च।
तत्पुत्रो मङ्गलारण्यस्तपस्वी ज्ञानिनां वरः॥ ११६॥

पुत्रको नृपश्रेष्ठस्तपसे पुष्करं गतः। सुचिरञ्च तपस्तप्त्वा वरं लब्ध्वा महेश्वरात॥
प्राप्य वैष्णवं पुत्रमनारण्यं जितेन्द्रियम्। दत्त्वा तस्मै च राज्यञ्च जगाम तपसेवनम्
नारण्यो नृपश्रेष्ठः सप्तद्वीपमहीपतिः। चकार यज्ञशतकं भृगुणा च पुरोधसा॥१२२॥
च्छंमत्वाशु शक्रत्वं न लेभेनश्वरंसुधीः। लीलया च जितःशक्रोलीलया च जितोबलिः
जिताश्च दानवेन्द्रा वै ज्वलता स्वेन तेजसा। बभूवुः शतपुत्राश्च राज्ञस्तस्य हिमालय॥

कन्यैका सुन्दरी रम्या पद्मा पद्मालयासमा।
सा कन्या यौवनस्था च बभूव पितृमन्दिरे॥ १२५॥
चारं प्रस्थापयामास वराय नृपतीश्वरः॥ १२६॥

कदा पिप्पलादश्च गन्तुं स्वाश्रममुत्सुकः। तपःस्थाने निर्जने च गन्धर्वं स ददर्श ह॥
षु निमग्नचित्तश्च शृङ्गाररससागरे। कामादतीवमत्तश्च न जानन्तं दिवानिशम्॥

दृष्ट्वा तं मुनिशार्दूलः सकामश्च बभूव ह।
ततः सुभग्नचित्तः सन् चिन्तयन् दारसंग्रहम्॥ १२६॥

कदा पुष्पभद्रायां स्नातुं गच्छन् मुनीश्वरः। ददर्श पद्मां युवतीं पद्मामिव मनोरमाम्
यं कन्येति पप्रच्छ समीपस्थान् जनान् मुनिः। जना निवेदनञ्चक्रुःपद्मानारण्यकन्यका

मुनिः स्नात्वाभीष्टदेवं सम्पूज्य राधिकेश्वरम्।
जगाम कामी भिक्षार्थमनारण्यसभां गिरे॥ १३२॥

राजा शीघ्रं मुनिं दृष्ट्वा प्रणनामभयाकुलः। मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः
कामात्सर्वं गृहीत्वा च ययाचे कन्यकां मुनिः। मौनी बभूव नृपतिःकिञ्चिन्निर्वक्तुमक्षमः
मुनिः पुनर्ययाचे तं कन्यां देहीति मे नृप। अथवा भस्मसात्सर्वं करिष्यामि क्षणेन च

